

# प्राक्कथन

श्रीमद् हेमचन्द्राचार्यनी कीर्तिगाथानुं वर्णन करवुं एटले सर्वमान्य सोनापर ढोळ चढाववा बराबर छे. तेमनुं व्यक्तित्व, प्रतिभा, विद्वत्ता तथा सर्वतोमुखी शक्ति एटली जगजाहेर छे के जैनज नहि पण अजैनोमां ये भाग्येज कोई हिंदी संस्कृतिनो विद्वान हशे जे श्री. हेमचन्द्राचार्यनी यश गाथाथी अजाण हशे. "गुजरातना ज्योतिर्धर" थी मांडी "कलिकालसर्वज्ञ" सरीकेनी एमनी कीर्ति ए वस्तुनी शाख पूरे छे.

तेओश्री एक महान जैनाचार्य होवा छतां तेओनी साहित्य-विषयक प्रवृत्ति सर्व क्षेत्रोमां प्रसरेली हती. काव्य, छंद, व्याकरण, कोश तथा गूढ तत्त्वज्ञान वगेरे विषयो तेमने हस्तामलकवत् हता. सिद्धराज जयसिंह तथा कुमारपाळ जेवा प्रतापी गूर्जर नरेशोपर तेमनो अप्रतिम प्रभाव तेमनी बुद्धि तेजस्विता तेमज प्रतिष्ठा बतावे छे एवा महापुरुषनी एक अद्वितीय कृति जनसमाज समक्ष मुकतां अमने आनंद थाय छे.

श्रीअभिधानचिंतामणि कोशनी महत्ता तेमज उपयोगितानी रूपरेखा दोरवी ए झवेरी आगळ झवेरातनुं वर्णन करवा बराबर छे. विद्वद्वर्ग आ अणमोल झवेरातने सारी रीते ओळखे छे.

आ संस्था तरफथी आनुं प्रकटीकरण वर्षो पूर्वे हाथ धरवामां आव्युं हतुं अने तेमनुं संशोधन कार्य श्रीमत् सागरानंदसूरीश्वरजी हस्तक थयुं छे. जे भूलोनी परंपराने लीधे शुद्धिपत्रक मुकवुं पड्युं छे ए प्रेसना अनभिज्ञ काम करनाराओनी साक्षी पूरे छे. आ कृतिनो अमुक मोटो भाग मुंबई बहारना प्रेसमां छपायो छे अने तेनी बेकाळजी तथा प्रिन्टिंग तरत जणाई जाय पूर्वां छे. अस्तु. संस्था आटला समय बाद पण आ पुस्तकने प्रगट करवा भाग्यशाळी थाय छे ते ओछो आनंदनो विषय नथी.

आ पुस्तकना प्रकटीकरणमां सहाय करनारा सर्वेनो संस्था तरफथी अमे आभार मानीए छीए.

ली० सेवको

मुंबई, ता० १५-१२-४५ हीराचंद कस्तुरचंद झवेरी.
सं. २००२, मौन एकादशी. मोतीचंद मगनभाई चोकसी.
मेनेजिंग ट्रस्टीओ.

# अभिधानचिन्तामणे विषयक्रमः ।







# श्रेष्ठी देवचन्द लालभाई जहेरी.



| जन्म १९०९ वैक्रमाब्दे | निर्याणम् १९६२ वैक्रमाब्दे |
| --- | --- |
| कार्तिकशुक्लैकादश्याम् | पौषकृष्णतृतीयायाम् |
| (देवदीपावली-सोमवासरे) | (मकरसङ्क्रान्तिमन्दवासरे) |
| सूर्यपूरे | मुम्बय्याम् |

श्रीसर्वज्ञाय नमः ।

# अभिधानचिन्तामणौ



## देवाधिदेवकाण्डः प्रथमः ।

प्रणिपत्यार्हतः सिद्धसाङ्गशब्दानुशासनः ।
रूढयौगिकमिश्राणां, नाम्नां मालां तनोम्यहम् ॥१॥

व्युत्पत्तिरहिताः शब्दा, रूढा आखण्डलादयः ।
योगोऽन्वयः स तु गुणक्रियासम्बन्धसम्भवः ॥२॥

गुणतो नीलकण्ठाद्याः, क्रियातः स्रष्टृसन्निभाः ।
स्वस्वामित्वादिसम्बन्धस्तत्राहुर्नाम तद्वताम् ॥३॥

स्वात् पाल-धन-भुग्-नेतृ-पति-मत्वर्थकादयः ।
भूपालो भधनो भूभुग्, भूनेता भूपतिस्तथा ॥४॥

भूमांश्चेति कविरूढ्या, ज्ञेयोदाहरणावली ।
[1]जन्यात्कृत्-कर्तृ-सृट्-स्रष्टृ-विधातृ-कर-सू-समाः ॥५॥

१ जन्यात्-कार्यात् यथा विश्वकृत् विश्वकर्ता विश्वसृट् विश्वस्रष्टा

²जनकाद् योनि-ज-रुह-जन्म-भू-सूत्यणादयः ।
³धार्य्यात् ध्वजा-ऽस्त्र-पाण्यङ्क-मौलि-भूषण-भृन्निभाः ॥६॥
शालि-शेखर-मत्वर्थ-मालि-भर्तृ-धरा अपि ।
⁴भोज्याद् भुग-ऽन्धो-व्रत-लिट्-पायि-पा-ऽशा-ऽशनाऽऽदयः ।७।
पत्युः कान्ता-प्रियतमा-वधू-प्रणयिनी-निभाः ।
कलत्राद् वर-रमण-प्रणयीश-प्रियादयः ॥८॥
⁵सख्युः सखिसमा वाह्याद्⁶, गामि-याना-ऽऽसनादयः ।
⁷ज्ञातेः स्वसृ-दुहित्रा-ऽऽत्मजा-ऽग्रजा-ऽवरजाऽऽदयः ॥९॥
⁸आश्रयात्सद्मपर्य्याय-शय-वासि-सदाऽऽदयः ।
⁹वध्याद् भिद्-द्वेषि-जिद्-घाति-ध्रुग-ऽरि-ध्वंसि-शासनाः॥१०॥
अप्य-ऽन्तकारि-दमन-दर्पच्छिन्-मथनाऽऽदयः ।
विवक्षितो हि सम्बन्ध, एकतोऽपि पदात्ततः ॥११॥

---

विश्वविधाता विश्वकरः विश्वसृः ब्रह्मा, अत्र समशब्द आदर्थः, तेन विश्वकारकः विश्वजनक इत्याद्यपि कविरूढ्यैव । २ यथा आत्मयोनिः 'आत्मज इत्यादि । ३ यथा वृषभध्वजः शूलास्त्र इत्यादि । ४ यथा मधुभुक् मध्वंध इत्यादि । ५ यथा नीलकण्ठसखः इत्यादि । ६ यथा वृषगामी वृषयानः इत्यादि । ७ यथा यमस्वसा इत्यादि । ८ यथा कुसद्मा कुशयः इत्यादि । ९ यथा पुरभिद् पुरद्वेषी इत्यादि ।

प्राक्प्रदर्शितसंबन्धिशब्दा योज्या यथोचितम् ।
दृश्यते खलु वाह्यत्वे, वृषस्य वृषवाहन ॥१२॥

स्वत्वे पुनर्वृषपतिर्धार्य्यत्वे वृषलांछनः ।
अंशोर्धार्यत्वेऽंशुमाली स्वत्वेऽंशुपतिरंशुमान् ॥१३॥

वध्यत्वेऽहेरहिरिपुर्भोज्यत्वे चाहिभुक् शिखी ।
चिह्नैर्व्यक्तैर्भवेद्व्यक्तेर्जातिशब्दोऽपि वाचक ॥१४॥

तया ह्यगस्तिपूता दिग् , दक्षिणाशा निगद्यते ।
अयुग्-विषमशब्दौ त्रि-पञ्च-सप्तादिवाचकौ ॥१५॥

त्रिनेत्रपञ्चेषुसप्तपलाशादिषु योजयेत् ।
गुणशब्दो विरोध्यर्थं, नञादिरितरोत्तर ॥१६॥

अभिधत्ते यथा कृष्ण , स्यादसित सितेतर. ।
वार्ड्यादिषु पदे पूर्वे, वाडवाग्न्यादिषूत्तरे ॥१७॥

द्वयेऽपि भूभृदाद्येषु, पर्य्यायपरिवर्तनम् ।
एवं परावृत्तिसहा, योगात् स्युरिति यौगिकाः १७ ॥१८॥

मिश्रा पुन परावृत्त्यसहा गीर्वाणसन्निभा. ।
प्रवक्ष्यन्तेऽत्र लिङ्गं तु, ज्ञेयं लिङ्गनुशासनात ॥१९॥

देवाधिदेवाः प्रथमे, काण्डे देवा द्वितीयके ।
नरास्तृतीये तिर्यञ्चस्तुर्य एकेन्द्रियादयः ॥२०॥
एकेन्द्रियाः पृथिव्यम्बुतेजोवायुमहीरुहः ।
कृमिपीलककलूताद्याः, स्युर्द्वित्रिचतुरिन्द्रियाः ॥२१॥
पञ्चेन्द्रियाश्चेभकेकिमत्स्याद्याः स्थलखाम्बुगाः ।
पञ्चेन्द्रिया एव देवा, नरा नैरयिका अपि ॥२२॥
नारकाः पञ्चमे साङ्गाः, षष्ठे साधारणाः स्फुटम् ।
प्रस्तोष्यन्तेऽव्ययाश्चात्र, त्वन्ताथादी न पूर्वगौ ॥२३॥

अर्हन् जिनः पारगतस्त्रिकालवित्
क्षीणाष्टकर्मा परमेष्ठ्यधीश्वरः ।
शम्भुः स्वयम्भूर्भगवान् जगत्प्रभु-
स्तीर्थङ्करस्तीर्थकरो जिनेश्वरः ॥२४॥

स्याद्वाद्य[15]भय[16]द[17]सार्वाः सर्वज्ञः[18] सर्वदर्शि[19]केवलिनौ[20] ।
देवाधिदेवबोधिदपुरुषोत्तमवीतरागाप्ताः ॥२५॥
एतस्यामवसर्पिण्यामृषभोऽजितशम्भवौ ।
अभिनन्दनः सुमतिस्ततः पद्मप्रभाभिधः ॥२६॥
सुपार्श्वश्चन्द्रप्रभश्च, सुविधिश्चाथ शीतलः ।
श्रेयांसो[11] वासुपूज्य[12]श्च, विमलो[13]ऽनन्ततीर्थकृत्[14] ॥२७॥

धर्मः[१५] शान्तिः[१६] कुन्थुररो,[१७,१८] मल्लिश्च[१९] मुनिसुव्रतः[२०] ।
नमिर्नेमिः[२१,२२] पार्श्वो[२३] वीरश्चतुर्विंशतिरर्हताम्[२४] ॥२८॥
ऋषभो वृषभः श्रेयान् श्रेयांसः स्यादनन्तजिदनन्तः ।
सुविधिस्तु पुष्पदन्तो मुनिसुव्रतसुव्रतौ तुल्यौ ॥२९॥
अरिष्टनेमिस्तु नेमिर्वीरश्चरमतीर्थकृत् ।
महावीरो वर्द्धमानो, देवार्य्यो ज्ञातनन्दनः ॥३०॥
गणा नवाऽस्यर्षिसङ्घा, एकादश गणाधिपाः ।
इन्द्रभूतिरग्निभूतिर्वायुभूतिश्च गौतमाः ॥३१॥
व्यक्तः सुधर्मा मण्डितमौर्यपुत्रावकम्पितः ।
अचलभ्राता मेतार्यः, प्रभासश्च पृथक्कुलाः ॥३२॥
केवली चरमो जम्बूस्वाम्यथ प्रभवः प्रभुः ।
शय्यम्भवो यशोभद्रः, सम्भूतविजयस्ततः ॥३३॥
भद्रबाहुः स्थूलभद्रः, श्रुतकेवलिनो हि षट् ।
महागिरिसुहस्त्याद्या, वज्रान्ता दशपूर्विणः ॥३४॥
इक्ष्वाकुकुलसम्भूता, स्याद् द्वाविंशतिरर्हताम् ।
मुनिसुव्रतनेमी तु, हरिवंशसमुद्भवौ ॥३५॥
नाभिश्च जितशत्रुश्च, जितारिरथ संवरः ।
मेघो धरः प्रतिष्ठश्च, महासेननरेश्वरः ॥३६॥

सुग्रीवश्च दृढरथो, विष्णुश्च वसुपूज्यराट् ।
कृतवर्म्मा सिंहसेनो, भानुश्च विश्वसेनराट् ॥३७॥
सूरः सुदर्शनः कुम्भः, सुमित्रो विजयस्तथा ।
समुद्रविजयश्चाश्वसेनः सिद्धार्थ एव च ॥३८॥
मरुदेवा विजया सेना सिद्धार्था च मङ्गला ।
ततः सुसीमा पृथ्वी, लक्ष्मणा रामा ततः परम् ॥३९॥
नन्दा विष्णुर्जया श्यामा, सुयशाः सुव्रता चिरा ।
श्रीदेवी प्रभावती च, पद्मा वप्रा शिवा तथा ॥४०॥
वामा त्रिशला क्रमतः, पितरो मातरोऽर्हताम् ।
स्याद्गोमुखो महायक्षस्त्रिमुखो यक्षनायकः ॥४१॥
तुम्बरुः सुमुखश्चापि, मातङ्गो विजयोऽजितः ।
ब्रह्मा यक्षेट् कुमारः षण्मुखपातालकिन्नराः ॥४२॥
गरुडो गन्धर्वो यक्षेट्, कुबेरो वरुणोऽपि च ।
भृकुटिर्गोमेधः पार्श्वो, मातङ्गोऽर्हदुपासकाः ॥४३॥
चक्रेश्वर्यजितबला, दुरितारिश्च कालिका ।
महाकाली श्यामा शान्ता, भृकुटिश्च सुतारका ॥४४॥
अशोका मानवी चण्डा, विदिता चाङ्कुशा तथा ।
कन्दर्पा निर्वाणी बला, धारिणी धरणप्रिया ॥४५॥

नरदत्ताऽथ गान्धार्य्यम्बिका पद्मावती तथा ।
सिद्धायिका चेति जैन्यः, क्रमाच्छासनदेवताः ॥४६॥

वृषो गजोऽश्वः प्लवगः, क्रौञ्चोऽब्जं स्वस्तिकः शशी ।
मकरः श्रीवत्सः खड्गी, महिषः शूकरस्तथा ॥४७॥

श्येनो वज्रं मृगश्छागो, नन्द्यावर्त्तो घटोऽपि च ।
कूर्मो नीलोत्पलं शङ्खः, फणी सिंहोऽर्हतां ध्वजाः ॥४८॥

रक्तौ च पद्मप्रभवासुपूज्यौ,
शुक्लौ च चन्द्रप्रभपुष्पदन्तौ ।
कृष्णौ पुनर्नेमिमुनी विनीलौ,
श्रीमल्लिपार्श्वौ कनकत्विषोऽन्ये ॥४९॥

उत्सर्पिण्यामतीतायां, चतुर्विंशतिरर्हताम् ।
केवलज्ञानी निर्वाणी सागरोऽथ महायशाः ॥५०॥

विमलः सर्वानुभूतिः, श्रीधरो दत्ततीर्थकृत् ।
दामोदरः सुतेजाश्च, स्वाम्यथो मुनिसुव्रतः ॥५१॥

सुमतिः शिवगतिश्चैवाऽस्तागोऽथ निमीश्वरः ।
अनिलो यशोधराख्यः, कृतार्थोऽथ जिनेश्वरः ॥५२॥

शुद्धमतिः शिवकरः, स्यन्दनश्चाथ सम्प्रतिः ।
भाविन्यान्तु पद्मनाभः, शूरदेवः सुपार्श्वकः ॥५३॥

स्वयंप्रभश्च सर्वानुभूतिर्देवश्रुतोदयौ ।
पेढालः पोट्टिलश्चापि, शतकीर्तिश्च सुव्रतः ॥५४॥
अममो निष्कषायश्च, निष्पुलाकोऽथ निर्ममः ।
चित्रगुप्तः समाधिश्च, संवरश्च यशोधरः ॥५५॥
विजयो मल्लदेवौ चानन्तवीर्यश्च भद्रकृत् ।
एवं सर्वावसर्प्पिण्युत्सर्प्पिणीषु जिनोत्तमाः ॥५६॥

तेषां च देहोऽद्भुतरूपगन्धो,
निरामयः स्वेदमलोज्झितश्च ।
श्वासोऽब्जगन्धो रुधिरामिषन्तु,
गोक्षीरधाराधवलं ह्यविस्रम् ॥५७॥

आहारनीहारविधिस्त्वदृश्य-
श्चत्वार एतेऽतिशयाः सहोत्थाः ।
क्षेत्रे स्थितिर्योजनमात्रकेऽपि,
नृदेवतिर्य्यग्जनकोटिकोटेः ॥५८॥

वाणी नृतिर्य्यक्सुरलोकभाषा-
संवादिनी योजनगामिनी च ।
भामण्डलं चारु च मौलिपृष्ठे,
विडम्बिताहर्प्पतिमण्डलश्रि ॥५९॥

साग्रे च गव्यूतिशतद्वये रुजा
वैरेतयो मार्यतिवृष्ट्यवृष्टयः ।
दुर्भिक्षमन्यस्वकचक्रतो भयं
स्यान्नैत एकादश कर्म्मघातजाः ॥६०॥

खे धर्मचक्रं चमराः सपाद-
पीठं मृगेन्द्रासनमुज्ज्वलञ्च ।
छत्रत्रयं रत्नमयो ध्वजोऽङ्घ्रि-
न्यासे च चामीकरपङ्कजानि ॥६१॥

वप्रत्रयं चारु चतुर्मुखाङ्गता, ।
चैत्यद्रुमोऽधोवदनाश्च कण्टकाः
द्रुमानतिर्दुन्दुभिनाद उच्चकै-
र्वातोऽनुकूलः शकुनाः प्रदक्षिणाः ॥६२॥

गन्धाम्बुवर्षं बहुवर्णपुष्प-
वृष्टिः कचश्मश्रुनखाप्रवृद्धिः ।
चतुर्विधामर्त्यनिकायकोटि-
र्जघन्यभावादपि पार्श्वदेशे ॥६३॥

ऋतूनामिन्द्रियार्थानामनुकूलत्वमित्यमी ।
एकोनविंशतिर्दिव्याश्चतुस्त्रिंशच्च मीलिताः ॥६४॥

संस्कारवत्त्व[1]मौदात्त्य[2]मुपचारपरीतता[3] ।
मेघगम्भीरघोषत्वं[4], प्रतिनादविधायिता[5] ॥६५॥
दक्षिणत्व[6]मुपनीतरागत्वं[7] च महार्थता[8] ।
अव्याहतत्वं[9] शिष्टत्वं[10], संशयानामसंभवः[11] ॥६६॥
निराकृतान्योत्तरत्वं[12], हृदयङ्गमतापि[13] च ।
मिथः साकाङ्क्षता[14] प्रस्तावौचित्यं[15] तत्त्वनिष्ठता[16] ॥६७॥
अप्रकीर्णप्रसृतत्व[17]मस्वश्लाघान्यनिन्दिता[18] ।
आभिजात्य[19]मतिस्निग्धमधुरत्वं[20] प्रशस्यता[21] ॥६८॥

---

०१ संस्कृतादिलक्षणवत्त्वं । ०२ उच्चैर्वृत्तिता । ०३ उपचाररहितत्वं । ०४ मेघस्येव गम्भीरशब्दत्वं । ०५ प्रतिध्वनियुक्तत्वं । ०६ सरलत्वं । ०७ मालवकौशिक्यादिग्रामरागयुक्तत्वं। एते शब्दाश्रया वाग्गुणा ज्ञेयाः, अन्ये अर्थाश्रया वाग्गुणाः । ०८ बृहदभिधेयता । ०९ पूर्वापरवाक्यार्थाविरोधित्वादव्याहतत्वं । ०१० अभिमतसिद्धौ वक्तुर्मनोज्ञार्थप्रयोजकत्वं शिष्टतासूचकत्वं वा । ०११ असंदिग्धता । ०१२ परदूषणाविषयता । ०१३ हृदयग्राह्यत्वं । ०१४ परस्परेण पदानां वाक्यानां वा सापेक्षत्वं । ०१५ देशकालाद्यव्यतीतत्वं । ०१६ विवक्षितवस्तुस्वरूपानुसारिता । ०१७ सुसम्बन्धस्य सतः प्रसरणं । ०१८ स्वश्लाघा-आत्मोत्कर्षः परनिन्दा च तयोर्विप्रयुक्तत्वं । ०१९ वक्तुः प्रतिपाद्यस्य वा भूमिकानुसारित्वं । ०२० घृतगुडादिवत् सुखकारित्वं । ०२१ प्राप्तश्लाघ्यता ।

अमर्म्मवेधिता[०२२]औदार्य्यं[०२३], धर्मार्थप्रतिबद्धता[०२४] ।
कारकाद्यविपर्य्यासो[०२५], विभ्रमादिवियुक्तता[०२६] ॥६९॥

चित्रकृत्त्व[०२७]मद्भुतत्वं[०२८], तथाऽनतिविलम्बिता[०२९] ।
अनेकजातिवैचित्र्य[०३०]मारोपितविशेषता[०३१] ॥७०॥

सत्त्वप्रधानता[०३२] वर्णपदवाक्यविविक्तता[०३३] ।
अव्युच्छित्ति[०३४]रखेदित्वं[०३५], पञ्चत्रिंशच्च वाग्गुणाः ॥७१॥

अन्तराया दान[१]लाभ[२]वीर्य[३]भोग[४]उपभोगगाः[५] ।
हासो[६] रत्य[७]रती[८] भीति[९]र्जुगुप्सा[१०] शोक[११] एव च ॥७२॥

कामो[१२] मिथ्यात्व[१३]मज्ञानं[१४], निद्रा[१५] चाविरति[१६]स्तथा ।
रागो[१७] द्वेषश्च[१८] नो दोषास्तेषामष्टादशाप्यमी ॥७३॥

---

०२२ अपरमर्माद्युद्घाटनस्वरूपं । ०२३ अभिधेयस्यातुच्छता । ०२४ धर्मार्थाभ्यामनपेतत्वं । ०२५ कारककालवचनलिङ्गादिविपर्य्यासराहित्यं । ०२६ मनोदोषवियुक्तत्वं । ०२७ उत्पादिताच्छिन्नकुतूहलत्वं । ०२८ प्रतीतत्वं । ०२९ अनतिविलम्बिता प्रतीता । ०३० अनेकवर्णनीयवस्तुस्वरूपवर्णनसंश्रयादतिविचित्रत्वं । ०३१ वचनान्तरापेक्षया आहितविशेषत्वं । ०३२ साहसोपेतता । ०३३ वर्णपदवाक्यानां विच्छिन्नत्वं । ०३४ विवक्षितार्थसम्यक्सिद्धिः अव्यवच्छिन्नवचनप्रमेयता । ०३५ अनायाससंभवः ।

महानन्दोऽमृतं सिद्धिः, कैवल्यमपुनर्भवः ।
शिवं निःश्रेयसं श्रेयो, निर्वाणं ब्रह्म निर्वृतिः ॥७४॥
महोदयः सर्वदुःखक्षयो निर्याणमक्षरम् ।
मुक्तिर्मोक्षोऽपवर्गोऽथ, मुमुक्षुः श्रमणो यतिः ॥७५॥
वाचंयमो यती साधुरनगार ऋषिर्मुनिः ।
निर्ग्रन्थो, भिक्षुरस्य स्वं, तपोयोगशमादयः ॥७६॥
अभाषणं पुनर्मौनं, गुरुर्धर्मोपदेशकः ।
मोक्षोपायो योगो ज्ञानश्रद्धानचरणात्मकः ॥७७॥
अनुयोगकृदाचार्य, उपाध्यायस्तु पाठकः ।
अनूचानः प्रवचने, साङ्गेऽधीती गणिश्च सः ॥७८॥
शिष्यो विनेयोऽन्तेवासी, शैक्षः प्राथमकल्पिकः ।
सतीर्थ्यास्त्वेकगुरवो, विवेकः पृथगात्मता ॥७९॥
एकब्रह्मव्रताचारा, मिथः सब्रह्मचारिणः ।
स्यात्पारम्पर्यमाम्नायः, सम्प्रदायो गुरुक्रमः ॥८०॥
व्रतादानं परिव्रज्या, तपस्या नियमस्थितिः ।
अहिंसा सूनृताऽस्तेयब्रह्माकिञ्चनता यमाः ॥८१॥
नियमाः शौचसन्तोषौ, स्वाध्यायतपसी अपि ।
देवताप्रणिधानञ्च, करणं पुनरासनं ॥८२॥

प्राणायामः प्राणयमः, श्वासप्रश्वासरोधनम् ।
प्रत्याहारस्त्विन्द्रियाणां, विषयेभ्यः समाहृतिः ॥८३॥
धारणा तु क्वचिद्ध्येये, चित्तस्य स्थिरबन्धनम् ।
ध्यानन्तु विषये तस्मिन्नेकप्रत्ययसन्ततिः ॥८४॥
समाधिस्तु तदेवार्थमात्राभासनरूपकम् ।
एवं योगो यमाद्यङ्गैरष्टभिः सम्मतोऽष्टधा ॥८५॥
श्वःश्रेयसं शुभशिवे कल्याणं श्वोवसीयसं श्रेयः ।
क्षेमं भावुकभविककुशलमङ्गलभद्रमद्रशस्तानि ॥८६॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामभिधानचिन्तामणौ
नाममालायां देवाधिदेवकाण्डः प्रथमः ॥१॥

## ॥ देवकाण्डः द्वितीयः ॥

स्वर्गस्त्रिविष्टपं द्योदिवौ भुवि स्तविषताविषौ नाकः ।
गौस्त्रिदिवमूर्ध्वलोकः सुरालयस्तत्सदस्त्वमराः ॥८७॥

देवाः सुपर्वसुरनिर्जरदेवतर्भु-
बर्हिर्मुखानिमिषदैवतनाकिलेखाः ।
वृन्दारकाः सुमनसस्त्रिदशा अमर्त्याः,
स्वाहा-स्वधा-क्रतु-सुधा-भुज आदितेयाः ॥८८॥

गीर्वाणा मरुतोऽस्वप्ना, विबुधा दानवारयः ।
तेषां यानं विमानोऽन्धः, पीयूषममृतं सुधा ॥८९॥

असुरा नागास्तडितः सुपर्णका वह्नयोऽनिलाः स्तनिताः ।
उदधिद्वीपदिशो दश भवनाधीशाः कुमारान्ताः ॥९०॥

स्युः पिशाचा भूता यक्षा राक्षसाः किन्नरा अपि ।
किम्पुरुषा महोरगा, गन्धर्वा व्यन्तरा अमी ॥९१॥

ज्योतिष्काः पञ्च चन्द्रार्कग्रहनक्षत्रतारकाः ।
वैमानिकाः पुनः कल्पभवा द्वादश ते त्वमी ॥९२॥

सौधर्म्मे[1]-शाने[2]-सनत्कुमार[3]माहेन्द्र[4]-ब्रह्मो[5]-लान्तक-जाः[6] ।
शुक्र[7]-सहस्रारा[8]-नत[9]प्राणत[10]-जा[11] आरणा-च्युत[12]जाः ॥९४॥
कल्पातीता नव ग्रैवेयकाः पञ्च त्वनुत्तराः ।
निकायभेदादेवं स्युर्देवाः किल चतुर्विधाः ॥९४॥
आदित्यः[1] सविता[2]ऽर्य्यमा[3] खरसहस्रोष्णांशु[6]रश्मि[7] रवि[8],
मार्त्तण्ड[9]स्तरणि[10]र्गभस्ति[11]ररुणो[12] भानु[13]र्नभो[14]-ऽहर्म्मणि[15]: ।
सूर्यो[16]ऽर्कः[17] किरणो[18]भगो[19] ग्रहपुष्प[20]: पूषा[21] पतङ्गः[22] खगो[23],
मार्तण्डो[24] यमुना-कृतान्त[25]जनकः[26] प्रद्योतन[27]स्तापनः[28] ॥९५॥
ब्रध्नो[29] हंस[30]श्चित्रभानु[31]र्विवस्वान्[32],
सूर[33]स्त्वष्टा[34] द्वादशात्मा[35] च हेलिः[36] ।
मित्रो[37] ध्वान्ता[38]रातिरब्जां-शु[39]-र्हस्त-
श्चक्रा[40]ब्जौ[41]-ह[42]-र्बान्धव[43]: सप्तसप्तिः[44] ॥९६॥
दिवा-दिना-ह-र्दिवस-प्रभा-विभा-
भासः-कर[51]: स्यान्मिहिरो[52] विरोचनः[53] ।
ग्रहा-ब्जिनी-गो-द्यु[57]-पतिर्विकर्त्तनो[58]
हरि[59]: शुचीनो[60] गगना[61]-ध्वजा-ध्वगौ[63] ॥९७॥
हरिदश्वो[64] जगत्कर्म-साक्षी[66] भास्वान्[67] विभावसुः[68] ।
त्रयीतनु[69]र्जगच्चक्षु[70]स्तपनो[71]ऽरुणसारथिः[72] ॥९८॥

रोचिरुस्रेरुचिशोचिरंशुगो, ज्योतिरर्चिरुपधृत्यभीशवः ।
प्रग्रहः शुचिमरीचिदीप्तयो, धामकेतुघृणिरश्मिवृश्नयः॥९९॥
पाददीधितिकरद्युतिद्युतो, रुग्विरोककिरणत्विषित्विषः ।
भाः प्रभावसुगभस्तिभानवो भा मयूखमहसी छविर्विभा ॥
॥१००॥

प्रकाशस्तेज उद्योतः, आलोको वर्च आतपः ।
मरीचिका मृगतृष्णा, मण्डलं तूपसूर्यकम् ॥१०१॥
परिधिः परिवेषश्च, सूरसूतस्तु काश्यपिः ।
अनूरुर्विनतासूनुररुणो गरुडाग्रजः ॥१०२॥
रेवन्तस्त्वर्करेतोजः, प्लवगो हयवाहनः ।
अष्टादश माठराद्याः, सवितुः पारिपार्श्विकाः ॥१०३॥
चंद्रमाः कुमुदबान्धवो दशश्वेतवाज्यमृतसूस्तिथिप्रणीः ।
कौमुदी-कुमुदिनी-भ-दक्षजा-रोहिणी-द्विज-निशौषधी-पतिः।
॥ १०४ ॥

जैवातृकोऽब्जश्च कला-शशी-ण—
च्छाया-भृदिन्दुर्विधुरत्रिदृग्जः ।
राजा निशो रत्नकरौ च चन्द्र :
सोमोऽमृत-श्वेत-हिम-द्युतिर्ग्लौः ॥ १९ ॥

षोडशोंऽशौ कला चिह्न, लक्षण लक्ष्म लाञ्छनम् ।
अङ्क कलङ्कोऽभिज्ञानं, चन्द्रिका चन्द्रगोलिका ॥१०६॥
चन्द्रातप कौमुदी च, ज्योत्स्ना बिम्ब तु मण्डलम् ।
नक्षत्र तारका ताराज्योतिषी भमुडु ग्रह ॥१०७॥
धिष्ण्यमृक्षमथाश्विन्यश्वकिनी दस्रदेवता ।
अश्वयुग् वालिनी चाथ, भरणी यमदेवता ॥१०८॥
कृत्तिका बहुलाश्चाग्निदेवा ब्राह्मी तु रोहिणी ।
मृगशीर्ष मृगशिरो, मार्गश्चान्द्रमस मृग ॥१०९॥
इल्वलास्तु मृगशिर शिर स्था पञ्च तारका ।
आर्द्रा तु कालिनी रौद्री, पुनर्वसू तु यामकौ ॥११०॥
आदित्यौ च पुष्यस्तिष्य , सिध्यश्च गुरुदैवत ।
सार्पीश्लेषा मघा पित्र्या , फाल्गुनी योनिदेवता॥१११॥
सा तूत्तरार्य्यमदेवी, हस्त सवितृदैवत ।
त्वाष्ट्री चित्राऽऽनिली स्वातिर्विशाखेन्द्राग्निदेवता॥११२॥
राधाऽनुराधा तु मैत्री, ज्येष्ठैन्द्री मूल आश्रप ।
पूर्वाषाढाऽऽपी सोत्तरा, स्याद्वैश्वी श्रवण पुन ॥११३॥

हरिर्देवैः श्रविष्ठा तु, धनिष्ठा वसुदेवता ।
वारुणी तु शतभिषग्गजा-हिर्बुध्न-देवताः ॥११४॥
पूर्वोत्तरा भाद्रपदा, द्वय्यः प्रोष्ठपदाश्च ताः ।
रेवती तु पौष्णं दाक्षायण्यः सर्वाः शशिप्रियाः ॥११५॥
राशीनामुदयो लग्नं, मेषप्रभृतयस्तु ते ।
आरो वक्रो लोहिताङ्गो, मङ्गलोऽङ्गारकः कुजः ॥११६॥
आषाढाभूर्नवार्चिश्च, बुधः सौम्यः प्रहर्षुलः ।
ज्ञः पञ्चार्चिः श्रविष्ठाभूः, श्यामाङ्गो रोहिणीसुतः ॥११७॥
बृहस्पतिः सुराचार्यो, जीवश्चित्रशिखण्डिजः ।
वाचस्पतिर्द्वादशार्चिर्धिषणः फाल्गुनीभवः ॥११८॥
गीर्बृहत्योः पतिरुतथ्यानुजाङ्गिरसौ गुरुः ।
शुक्रो मघाभवः काव्य, उशना भार्गवः क
षोडशार्चिर्दैत्यगुरुर्धिष्ण्यः शनैश्चरः शनि
छायासुतोऽसितः सौरिः, सप्तार्चिः रेवतीभ
मन्दः कोडो नीलवासाः, स्वर्भानुस्तु वि
तमो राहुः सैंहिकेयो, भरणीभूरथाहि
अश्लेषाभूः शिखी केतुर्ध्रुवस्त्वौत्तानपादि
अगस्त्योऽगस्तिः पीताब्धिर्वातापिद्विड् ॥ १

तिथिप्रणीः
निशौषधी-पारि
॥ १०४ ॥

मैत्रावरुणिरागस्त्येय, और्वशेयोग्निमारुतौ ।
लोपामुद्रा तु तद्भार्या, कौपीतकी वरप्रदा ॥१२३॥
मरीचीप्रमुखाः सप्तर्षयश्चित्रशिखण्डिनः ।
पुष्पदन्तौ पुष्पवन्तावेकोक्त्या शशिभास्करौ ॥१२४॥
राहुग्रासोऽर्केन्द्वोर्ग्रह, उपरागे उपप्लवः ।
उदलिङ्गं त्वरिष्टं स्यादुपसर्ग उपद्रवः । ॥१२५॥
अजन्यमीतिरुत्पातो, वह्न्युत्पात उपाहितः ।
स्यात्कालः समयो दिष्टानेहसौ सर्वमूषकः ॥१२६॥
कालो द्विविधोऽवसर्पिण्युत्सर्पिणीविभेदतः ।
सागरकोटीकोटीनां, विंशत्या स समाप्यते ॥१२७॥
अवसर्पिण्यां षडरा उत्सर्पिण्यास्त एव विपरीताः ।
एवं द्वादशभिररैर्विवर्त्तते कालचक्रमिदम् ॥१२८॥
तत्रैकान्तसुषमोऽरश्चतस्रः कोटिकोटयः ।
सागराणां सुषमा तु, तिस्रस्तत्कोटिकोटयः ॥१२९॥
सुषमदुष्षमा ते द्वे, दुष्षमसुषमा पुनः ।
एका सहस्रैर्वर्षाणां, द्विचत्वारिंशतोनिता ॥१३०॥
अथ दुष्षमैकविंशतिरब्दसहस्राणि तावती तु स्यात् ।
एकान्तदुष्षमापि हि एतत्संख्याः परेऽपि विपरीताः॥१३१॥

श्राद्धकालस्तु कुतपोऽष्टमो भागो दिनस्य यः ।
निशा निशीथिनी रात्रिः, शर्वरी क्षणदा क्षपा ॥१४१॥
त्रियामा यामिनी भौती, तमी तमी विभावरी ।
रजनी वसती श्यामा, वासतेयी तमस्विनी ॥१४२॥
उषा दोषेन्दुकान्ताऽथ ,तमिस्रा दर्शयामिनी ।
ज्योत्स्नी तु पूर्णिमारात्रिर्गणरात्रो निशागणः ॥१४३॥
पक्षिणी पक्षतुल्याभ्यामहोभ्यां वेष्टिता निशा ।
गर्भकं रजनीद्वन्द्वं, प्रदोषो यामिनीमुखम् ॥१४४॥
यामः प्रहरो निशीथस्त्वर्धरात्रो महानिशा ।
उच्चन्द्रस्त्वपररात्रस्तमिस्रं तिमिरं तमः ॥१४५॥
ध्वान्तं भूच्छायाऽन्धकारं, तमसं समवान्धतमे ।
तुल्यनक्तन्दिने काले, विषुवद्विषुवं च तत् ॥१४६॥
पञ्चदशाहोरात्रः स्यात्पक्षः स बहुलोऽसितः ।
तिथिः पुनः कर्मवाटी, प्रतिपत्पक्षतिः समे ॥१४७॥

---

१ दिनस्य योऽष्टमो भागः स श्राद्धकालः कुतपश्च उच्यते इत्यर्थः । दिनस्य पुराणोक्तानि रौद्रादीनि भगान्तानि पञ्चदश मुहूर्तानि, तन्मध्ये गगनाख्येन योऽष्टमो मुहूर्तः स कुतप उच्यते । तत्प्रयोजनं च श्राद्धे, अन्यकर्मण्यपि अष्टमो मुहूर्तः अभिजिदाख्य एव ।

पञ्चदश्यौ[1] यज्ञकालौ[3], पक्षान्तौ[3] पर्वणी[4] अपि ।
तत्पर्वमूलं[1] भूतेष्टापञ्चदश्योर्यदन्तरम् ॥१४८॥
स पर्वसन्धिः[1] प्रतिपत्पञ्चदश्योर्यदन्तरम् ।
पूर्णिमा[1] पौर्णमासी[2] सा, राका[3] पूर्णे निशाकरे ॥१४९॥
कलाहीने त्वनुमतिर्[1]मार्गशीर्ष्याग्रहायणी[3] ।
अमावस्यामावस्या[3], दर्शः[1] सूर्येन्दुसङ्गमः[1] ॥१५०॥
अमावास्या[6]मावासी च, सा नष्टेन्दुः कुहुः[1] कुहूः[3] ।
दृष्टेन्दुस्तु सिनीवाली, भूतेष्टा[1] तु चतुर्दशी ॥१५१॥
पक्षौ मासो वत्सरादिर्मार्गशीर्षः[2] सहः सहाः ।
आग्रहायणिकश्चाथ, पौषस्तैषः सहस्यवत् ॥१५२॥
माघस्तपाः फाल्गुनस्तु, फाल्गुनिकस्तपस्यवत्[3] ।
चैत्रो मधुश्चैत्रिकश्च[3], वैशाखे राधमाधवौ[3] ॥१५३॥
ज्येष्ठस्तु शुक्रोऽथाषाढः, शुचिः स्याच्छ्रावणो नभाः[3] ।
श्रावणिकोऽथ[3] नभस्यः, प्रौष्ठभाद्रपरः पदः ॥१५४॥
भाद्रश्चाप्याश्विने[4] त्वाश्वयुजेषावथ कार्तिकः ।
कार्त्तिकिको बाहुलोर्ज्जौ[4], द्वौ द्वौ मार्गादिकावृतुः ॥१५५॥
हेमन्तः प्रशोलो रौद्रोऽथ शैषैशिशिरौ[2] समौ ।
वसन्त इष्यः सुरभिः, पुष्पकालो बलाङ्गकः ॥१५६॥

उष्णे उष्णागमो ग्रीष्मो, निदाघस्तप उष्मकः ।
वर्षास्तपात्ययः प्रावृण्, मेघात्कालागमौ क्षरी ॥१५७॥
शरद् घनात्ययोऽथैनं, शिशिराद्यैस्त्रिभिस्त्रिभिः ।
अयने द्वे गतिरुदग्दक्षिणार्कस्य वत्सरः ॥१५८॥
स सं-पर्य्य-नुद्भ्यो वर्ष, हायनोऽब्दः समाः शरत् ।
भवेत्पैत्र्यं त्वहोरात्रं, मासेनाब्देन दैवतम् ॥१५९॥
दैवे युगसहस्रे द्वे, ब्राह्मं कल्पौ तु ते नृणाम् ।
मन्वन्तरं तु दिव्यानां, युगानामेकसप्ततिः ॥१६०॥
कल्पो युगान्तः कल्पान्तः, संहारः प्रलयः क्षयः ।
संवर्त्तः परिवर्त्तश्च, समसुप्तिर्जिहानकः ॥१६१॥
तत्कालस्तु तदात्वं स्यात्तज्जं सान्दृष्टिकं फलम् ।
आयतिस्तूत्तरः काल, उदर्कस्तद्भवं फलम् ॥१६२॥
व्योमान्तरिक्षं गगनं घनाश्रयो,
विहाय आकाशमनन्तपुष्करे ।
अभ्रं सुरा-भ्रो-डु-मरुत्पथोऽम्बरं,
खं द्योदिवौ विष्णुपदं वियन्नभः ॥१६३॥
नभ्राट् तडित्वान्मुदिरो घनाघनोऽ-
भ्रं धूमयोनिस्तनयित्नुमेघाः ।

जीमूतपर्जन्यवलाहका घनो ,
धाराधरो वाह-द-मुग्-धरा जलात् ॥१६४॥
कादम्बिनी मेघमाला, दुर्दिनं मेघजं तमः
आसारो वेगवान् वर्षो, वातास्तं वारि शीकरः ॥१६५॥
वृष्टयां वर्षणवर्षे तद्विघ्ने ग्राह-ग्रहावग्रात् ।
घनोपलस्तु करकः, काष्ठाऽऽशा दिग् हरित्ककुप् ॥१६६
पूर्वा प्राची दक्षिणाऽपाची प्रतीची तु पश्चिमा ।
अपराऽथोत्तरोदीची, विदिक् त्वपदिशं प्रदिक् ॥१६७॥
दिश्यं दिग्भववस्तुन्यपागपाचीनमुदगुदीचीनम् ।
प्राक् प्राचीनं च समे प्रत्यक् तु स्यात्प्रतीचीनम्॥१६८॥
तिर्य्यग्दिशां तु पतय, इन्द्राग्नियमनैर्ऋताः ।
वरुणो वायुकुबेरावीशानश्च यथाक्रमम् ॥१६९॥
ऐरावतः पुण्डरीको , वामनः कुमुदोऽञ्जनः ।
पुष्पदन्तः सार्व्वभौमः, सुप्रतीकश्च दिग्गजाः ॥१७०॥
इन्द्रो हरिर्दुश्च्यवनोऽच्युताग्रजो,
वज्री बिडौजा मघवान् पुरन्दरः ।
प्राचीनबर्हिः पुरुहूतवासवौ ,
सङ्क्रन्दनाखण्डलमेघवाहनाः ॥१७१॥

सुत्रामवास्तोष्पतिदिलिम्बिशक्राः वृषा सुनासीरसहस्रनेत्रौ
पर्जन्यहर्यश्वऋभुक्षिबाहुदन्तेयवृद्धश्रवसस्तुराषाट् ।।१७२।।
सुरर्षभस्तपस्तक्षो जिष्णुर्वरशतक्रतुः ।
कौशिकः पूर्वदिग्-देवाप्सरः-स्वर्ग-शची-पतिः ।।१७३।।
पृतनाषाडुग्रधन्वा, मरुत्वान्मघवाऽस्य तु ।
द्विषः पाकोऽद्रेयो वृत्रः, पुलोमा नमुचिर्बलः ।।१७४।।
जम्भः प्रिया शचीन्द्राणी, पौलोमी जयवाहिनी ।
तनयस्तु जयन्तः स्याज्जयदत्तो जयश्च सः ।।१७५।।
सुता जयन्ती तविषी, ताविष्युच्चैःश्रवा हयः ।
मातलिः सारथिर्देवनन्दी द्वाःस्थो गजः पुनः ।।१७६।।
ऐरावणोऽभ्रमातङ्गश्चतुर्दन्तोऽर्कसोदरः ।
ऐरावतो हस्तिमल्लः, श्वेतगजोऽभ्रमुप्रियः ।।१७७।।
वैजयन्तौ तु प्रासादध्वजौ पुर्यमरावती ।
सरो नन्दीसरः पर्षत्सुधर्मा नन्दनं वनम् ।।१७८।।
वृक्षाः कल्पः पारिजातो, मन्दारो हरिचन्दनः ।
सन्तानश्च धनुर्देवायुधं तदृजु रोहितम् ।।१७९।।

दीर्घमन्तरालेन वज्रं, त्वशनिर्ह्रादिनी स्वरुः ।
शतकोटिः पविः शम्बो, दम्भोलिर्भिदुरं भिदुः ॥१८०॥
व्याघामैः कुलिशोऽस्याग्निरनिभीः स्फूर्जथुर्ध्वनिः ।
स्वर्वैद्यावश्विनीपुत्रावश्विनौ वडवासुतौ ॥१८१॥
नासत्यावाश्विनौ दस्रौ, नासत्याब्धिजौ यमौ ।
विश्वकर्मा पुनस्त्वष्टा, विश्वकृद्देववर्धकिः ॥१८२॥
स्युः स्वर्गिवध्वोऽप्सरसः, स्वर्वेश्या उर्वशीमुखाः ।
हाहाद्यास्तु गन्धर्वा, गान्धर्वा देवगायनाः ॥१८३॥
यमः कृतान्तः पितृदक्षिणाशा-
प्रेतात्पतिर्दण्डधरोऽर्कसूनुः ।
कीनाशमृत्यू समवर्त्तिकालौ
शीर्णाङ्घ्रिहर्य्यन्तकधर्मराजाः ॥१८४॥
यमराजः श्राद्धदेवः, शमनो महिषध्वजः ।
कालिन्दीसोदरश्चापि, धूमोर्णा तस्य वल्लभा ॥१८५॥
पुरी पुनः संयमनी, प्रतीहारस्तु वैध्यतः ।
दासौ चण्डमहाचण्डौ, चित्रगुप्तस्तु लेखकः ॥१८६॥
स्याद्राक्षसः पुण्यजनो नृचक्षा

यातुराशरः कौणपयातुधानौ ।
रात्रिञ्चरो रात्रिचरः पलादः
कीनाशरक्षोनिकसात्मजाश्च ॥१८७॥
क्रव्यात्कर्बुरनैर्ऋतावसृक्पो
वरुणस्त्वर्णवमन्दिरः प्रचेताः ।
जल-यादःपतिपाशिमेघनादा
जलकान्तारः स्यात्परञ्जनश्च ॥१८८॥
श्रीदः सितोदरकुहेशसखाः पिशाच-
कीच्छावसुस्त्रिशिर ऐडविलैकपिङ्गाः ।
पौलस्त्यवैश्रवणरत्नकराः कुबेर[3]-
यक्षौ नृधर्मधनदौ नरवाहनश्च ॥१८९॥
कैलासौकाः यक्ष-धन-निधि-किम्पुरुषे-श्वरः ।
विमानं पुष्पकं चैत्ररथं वनं पुरी प्रभो ॥१९०॥
अलका वस्वोकसारा, सुतोऽस्य नलकूबरः ।
वित्तं रिक्थं स्वापतेयं, राः सारं विभवो वसु ॥१९१॥

---

( १ ) यातु यातुनी पुंस्यपि, यदाह धनपालः "क्रव्यादा यातवो यातुधानाः" इति ।

२ पुंस्यपि, यदाह धनपालः "सारोऽर्थो द्रविणं धनं" ।

र्द्युम्न[11] द्रव्य[12] पृक्थ[13] मृक्थ[14], स्वमृक्ण[15] द्रविणं धनम् ।
हिरण्यार्थौ[16,17] निधान तु, कुनाभि शेवधिर्निधि ॥१९२

महापद्मश्च पद्मश्च, शङ्खो मकरकच्छपौ[1] ।
मुकुन्दकुन्दनीलाश्च, चर्चाश्च निधयो नव ॥१९३॥

यक्षे पुण्यजनो[2] राजो, गुह्यको[4] वटवास्यपि ।
किन्नरस्तु किम्पुरुषस्तुरङ्गवदनो[3] मयुः ॥१९४॥

शम्भु शर्व[2] स्थाणुरीशान[5] ईशो[6],
रुद्रोड्डीशौ[7] वामदेवो[8] वृषाङ्क ।
कण्ठेकालः शङ्करो[11] नीलकण्ठ,
श्रीकण्ठोग्रौ[14] धूर्जटिर्भीम भर्गौ[15,16,17] ॥१९५॥

मृत्युञ्जय पञ्चमुखोऽष्टमूर्ति[19,20],
श्मशानवेश्मा गिरिशो[22] गिरीश[23]।
षण्ढ[24] कपर्दीश्वर[25,26] ऊर्द्ध्वलिङ्ग[27],
एक-त्रि-दृक्[28,30] भालदृगेकपाद[31] ॥१९६॥

---

१ चर्चा चर्चसौ चर्चस इत्यादि । २ सद्योजात १ वामदेव २ अघोर ३ तत्पुरुष ४ ईशान ५ति पञ्च मुखानि ।

मृडो[३२]ऽट्टहासी[३३] घनवाहनो[३४]ऽहि-
बुध्नो[३५][३६] विरूपाक्ष[३७]विषान्तकौ[३८] च ।
महाव्रतो[३९] वह्नि-हिरण्यरेताः[४१]
शिवो[४२]ऽस्थिधन्वा[४३] पुरुपास्थिमाली[४४]॥१९७॥
स्याद् व्योमकेशः[४५] शिपिविष्ट[४६]भैरवो[४७],
दिक्-कृत्ति-वासा[४९] भवनील[५०]लोहितौ[५१] ।
सर्वज्ञ[५२]-नाट्यप्रिय[५३]खण्डपरशवो[५४],
महापरा देव-नटे-श्वरौ हरः ॥१९८॥
पशु-प्रथम-भूतो-मा-पतिः[६२] पिङ्ग[६३]-जटेक्षणः[६४] ।
पिनाक-शूल-खट्वाङ्ग-गङ्गा-ऽही-न्दु-कपाल-भृत् ॥१९९॥
गज-पुष-पुरा-नङ्ग-काला-न्धक-मखाऽसुहृद् ।
कपर्दो[१]ऽस्य जटाजूटः[२], खट्वाङ्ग[१]स्तु सुखंसुणः[२] ॥२००॥
पिनाकं[१] स्यादाजगवं[२]मजकावं[३] च तद्धनुः ।
ब्राह्मयाद्या मातरः[१] सप्त, प्रमथाः[१] पार्षदा[२] गणाः[३] ॥२०१॥
लघिमा[१] वशिते[२]शित्वं[३], प्राकाम्यं[४] महिमोऽणिमा ।
यत्र कामावसायित्वं[७], प्राप्ति[८]रैश्वर्यमष्टधा ॥२०२॥

गौरी काली पार्वती मातृमाता-
ऽपर्णा रुद्राण्यम्बिका त्र्यम्बकोमा ।
दुर्गा चण्डी सिंहयाना मृडानी,
कात्यायन्यौ दक्षजार्या कुमारी ॥२०३॥
सती शिवा महादेवी, शर्व्वाणी सर्व्वमङ्गला ।
भवानी कृष्ण-मैनाक-स्वसा मेनाद्रिजेश्वरा ॥२०४॥
निशुम्भ-शुम्भ-महिष-मथनी भूतनायिका ।
तस्याः सिंहो मनस्तालः, सख्यौ तु विजया जया ॥२०५॥
चामुण्डा चर्चिका चर्म्ममुण्डा मार्ज्जारकर्णिका ।
कर्णमोटी महागन्धा, भैरवी च कपालिनी ॥२०६॥
हेरम्बो गण-विघ्नेशः, पर्शुपाणिर्विनायकः ।
द्वैमातुरो गजास्यैकदन्तौ लम्बोदराखुगौ ॥२०७॥
स्कन्दः स्वामी महासेनः, सेनानीः शिखिवाहनः ।
षाण्मातुरो ब्रह्मचारी, गङ्गो-मा-कृत्तिका-सुतः ॥२०८॥
द्वादशाक्षो महातेजाः, कुमारः षण्मुखो गुहः ।
विशाखः शक्तिभृत् क्रौञ्च-तारकारिः शराग्नि-भूः ॥२०९॥

भृङ्गी भृङ्गिरिटिर्भृङ्गिरिटिर्नाड्य-स्थि-विग्रहः ।
कूष्माण्डके केलिकिलो, नन्दीशे तण्डु-नदिनौ ॥२१०॥

द्रुहिणो विरिञ्चिर्द्रुघणो विरिञ्चः,
परमेष्ठ्यजोऽष्टश्रवणः स्वयम्भूः ।
कमनः कविः सात्विकवेदगर्भौ,
स्थविरः शतानन्दपितामहौ कः ॥२११॥

धाता विधाता विधिवेधसौ ध्रुवः,
पुराणगो हंसगविश्वरेतसौ ।
प्रजापतिर्ब्रह्मचतुर्मुखौ भवा-
न्तकृज्जगत्कर्तृसरोरुहासनौ ॥२१२॥

शम्भुः शतधृतिः स्रष्टा, सुरज्येष्ठो विरिञ्चिनः ।
हिरण्यगर्भो लोकेशो, नाभि-पद्मा-त्म-भूरपि ॥२१३॥

विष्णुर्जिष्णुर्जनार्दनो हरिर्हृषीकेशोऽच्युतः केशवो,
दाशार्हः पुरुषोत्तमोऽब्धिशयनोपेन्द्रावजेन्द्रानुजौ ।
विष्वक्सेननरायणौ जलशयो नारायणः श्रीपति-
र्दैत्यारिश्च पुराण-यज्ञ-पुरुषस्तार्क्ष्यध्वजोऽधोक्षजः ॥२१४॥

गोविन्दपद्मबिन्दुमुकुन्दकृष्णा, वैकुण्ठपद्मेशयपद्मनाभाः
वृषाकपिर्माधववासुदेवौ, विश्वम्भरः श्रीधरविश्वरूपौ ॥२१५॥

दामोदरः शौरिसनातनौ विधुः,
पीताम्बरो मार्जजितो कुमोदक ।
त्रिविक्रमो जन्हुचतुर्भुजौ पुन-
र्वसुः शतावर्त्तगदाग्रजौ स्वभूः ॥२१६॥

मुञ्जकेशिवनमालिपुण्डरीकाक्षबभ्रुशशबिन्दुवेधसः ।
पृश्निशृंगधरणीधरोत्तमभूपाण्डवार्धनसुवर्णबिन्दवः ॥२१७॥

श्रीवत्सो देवकीसूनुर्गोपेन्द्रो विष्टरश्रवाः ।
सोमसिन्धुर्जगन्नाथो, गोवर्द्धनधरोऽपि च ॥२१८॥

यदुनाथो गदा-शाङ्ग-चक्र-श्रीवत्स शङ्ख-भृत् ।
मधुधेनुकचाणूरपूतनायमलार्जुनाः ॥२१९॥

कालनेमिहयग्रीवशकटारिष्टकैटभाः ।
कंसकेशिमुरा. साल्वमैन्दद्विविदराहवः. ॥२२०॥

हिरण्यकशिपुर्बाणः, कालीयो नरको बलिः ।
शिशुपालश्चास्य वध्या, वैनतेयस्तु वाहनम् ॥२२१॥

शङ्खोऽस्य पाञ्चजन्योऽङ्कः श्रीवत्सोऽसिस्तु नन्दकः ।
गदा कौमोदकी चापं शार्ङ्गं चक्रं सुदर्शनः ॥२२२॥
मणिः स्यमन्तको हस्ते, भुजमध्ये तु कौस्तुभः ।
वसुदेवो भूकश्यपो, दिन्दुरानकदुन्दुभिः ॥२२३॥
रामो हली मुसलिसात्वतकामपालाः
सङ्कर्षणः प्रियमधुर्बलरौहिणेयौ ।
रुक्मिप्रलम्बयमुनाभिदनन्तताल-
लक्ष्मैककुण्डलसितासित-रेवतीशाः ॥२२४॥
बलदेवो बलभद्रो नीलवस्त्रोऽच्युताग्रजः ।
मुशलं त्वस्य सौनन्दं हलं संवर्त्तकाह्वयम् ॥२२५॥
लक्ष्मीः पद्मा रमा या मा, ता सा श्रीः कमलेन्दिरा ।
हरिप्रिया पद्मवासा, क्षीरोदतनयाऽपि च ॥२२६॥
मदनो जराभीरुरनङ्गमन्मथौ
कमनः कलाकेलिरनन्यजोऽङ्गजः ।

---

०१ श्रीवत्सस्तु विष्णुहृदये रोम्णो दक्षिणावर्त्तः । ०२ वाचस्पतिस्तु चक्रं सुदर्शनोऽस्त्रियामित्याह । ०३ अत्र श्लोके या इत्यस्य, ई, आ, इति छेदः, ई अत्र पद्मयोगादिति ङी प्रत्ययः, आ इत्ययं आबन्तो गङ्गावत् । या इत्यखण्डमपि, तथा च विश्वशम्भुः " या रमामातृष्विति " ।

मधुदीपमारौ मधुसारथिस्मरौ
विषमायुधो दर्पककामहृच्छयाः ॥२२७॥
प्रद्युम्नः श्रीनन्दनश्च, कन्दर्पः पुष्पकेतनः ।
पुष्पाण्यस्येषुचापास्त्राण्यरी शम्बरशूर्पकौ ॥२२८॥
केतनं मीनमकरौ, बाणाः पञ्च रतिः प्रिया ।
मनःशृङ्गारसङ्कल्पात्मानो योनिः सुहृन्मधुः ॥ २२९ ॥
सुतोऽनिरुद्ध ऋष्याङ्कः, उषेशो ब्रह्मसूश्च सः ।
गरुडः शाल्मल्यरुणावरजो विष्णुवाहनम् ॥२३०॥
सौपर्णेयो वैनतेयः सुपर्णः
सर्पारातिर्वज्रजिद्वज्रतुण्डः ।
पक्षिस्वामी काश्यपिः स्वर्णकाय-
स्तार्क्ष्यः कामायुर्गरुत्मान् सुधाहृत् ॥२३१॥
बुद्धस्तु सुगतो धर्मधातुस्त्रिकालविज्जिनः ।
बोधिसत्त्वो महाबोधिरार्यः शास्ता तथागतः ॥२३२॥
पञ्चज्ञानः षडभिज्ञो, दशार्हो दशभूमिगः
चतुस्त्रिंशज्जातकज्ञो, दशपारमिताधरः ॥२३३॥
द्वादशाक्षो दशबलस्त्रिकायः श्रीघनाद्वयौ ।
समन्तभद्रः सङ्गुप्तो, दयाकूर्चो विनायकः ॥२३४॥

मार-लोक-स्व-जिद्धर्मराजो विज्ञानमातृकः ।
महामैत्रो मुनीन्द्रश्च, बुद्धाः स्युः सप्त ते त्वमी ॥२३५॥
विपश्यी शिखी विश्वभूः, क्रकुच्छन्दश्च काञ्चनः ।
काश्यपश्च सप्तमस्तु, शाक्यसिंहोऽर्कबान्धवः ॥२३६॥
तथा राहुलसूः सर्वार्थसिद्धो गौतमान्वयः ।
माया-शुद्धोदन-सुतो, देवदत्ताग्रजश्च सः ॥२३७॥
असुरा दितिदनुजाः, पातालौकःसुरारयः ।
पूर्वदेवाः शुक्रशिष्या, विद्यादेव्यस्तु षोडश ॥२३८॥
रोहिणी प्रज्ञप्तिर्वज्रशृङ्खला कुलिशाङ्कुशा ।
चक्रेश्वरी नरदत्ता, काल्यथासौ महापरा ॥२३९॥
गौरी गान्धारी सर्वास्त्रमहाज्वाला च मानवी ।
वैरोट्याऽच्छुप्ता मानसी, महामानसिकेति ता. ॥२४०॥
वाग् ब्राह्मी भारती गौर्गीर्वाणी भाषा सरस्वती ।
श्रुतदेवी वचनं तु व्याहारो भाषितं वचः ॥२४१॥
सविशेषणमाख्यातं, वाक्यं स्त्याद्यन्तकं पदम् ।
राद्धसिद्धकृतेभ्योऽन्तः, आप्तोक्तिः समयागमौ ॥२४२॥
आचाराङ्गं सूत्रकृतं, स्थानाङ्गं समवाययुक् ।
पञ्चमं भगवत्यङ्गं, ज्ञाताधर्मकथापि च ॥२४३॥

उपासकान्तकृद्दनुत्तरोपपातिकादशाः ।
प्रश्नव्याकरणं चैव, विपाकश्रुतमेव च ॥२४४॥
इत्येकादश सोपाङ्गान्यङ्गानि द्वादशं पुनः ।
दृष्टिवादो द्वादशाङ्गी, स्याद्गणिपिटकाह्वया ॥२४५॥
परिकर्म्म- सूत्र-पूर्वानुयोग-पूर्वगत-चूलिकाः पञ्च ।
स्युर्दृष्टिवादभेदाः पूर्वाणि चतुर्दशापि पूर्वगते ॥२४६॥
उत्पादपूर्वमग्रायणीयमथ वीर्य्यतः प्रवादं स्यात् ।
अस्तेर्ज्ञानात्सत्यात्तदात्मनः कर्म्मणश्च परम् ॥२४७॥
प्रत्याख्यानं विद्याप्रवादं-कल्याणं-नामधेये च ।
प्राणावायं च क्रियाविशालमथ लोकबिन्दुसारमिति ।२४८
स्वाध्यायः श्रुतिराम्नायश्छन्दो वेदस्त्रयी पुनः ।
ऋग्यजुःसामवेदा. स्युरथर्वा तु तदुद्धृतिः ॥२४९॥
वेदान्तः स्यादुपनिषदोङ्कारप्रणवौ समौ ।
शिक्षा कल्पो व्याकरणं, छन्दो ज्योतिर्निरुक्तयः ॥२५०॥
षडङ्गानि धर्मशास्त्रं, स्यात् स्मृतिर्धर्म्मसंहिता ।
आन्वीक्षिकी तर्कविद्या, मीमांसा तु विचारणा ॥२५१॥
सर्गश्च प्रतिसर्गश्च, वंशो मन्वन्तराणि च ।
वंशानुवंशचरितं, पुराणं पञ्चलक्षणम् ॥२५२॥

षडङ्गी वेदाश्चत्वारो, मीमांसा[11]ऽन्वीक्षिकी[12] तथा ।
धर्मशास्त्रं[13] पुराणं च[14], विद्या एताश्चतुर्दश ॥२९३॥
सूत्रं सूचनकृद्भाष्यं सूत्रोक्तार्थप्रपञ्चकम् ।
प्रस्तावस्तु प्रकरणं, निरुक्तं पदभञ्जनम् ॥२९४॥
अवान्तरप्रकरणविश्रामे शीघ्रपाठतः ।
आह्निकमधिकरणन्त्वेकन्यायोपपादनम् ॥२९५॥
उक्तानुक्तदुरुक्तार्थचिन्ताकारि तु वार्त्तिकम् ।
टीका निरन्तरव्याख्या, पञ्जिका पदभञ्जिका ॥२९६॥
निबन्धवृत्ती अन्वर्थे, संग्रहस्तु समाहृतिः ।
परिशिष्टपद्धत्यादीन्, पथाऽनेन समुन्नयेत् ॥२९७॥
कारिका तु स्वल्पवृत्तौ, बहोरर्थस्य सूचनी ।
कलिन्दिका सर्वविद्या, निघण्टुर्नामसङ्ग्रहः ॥२९८॥
इतिहासः पुरावृत्त, प्रवह्लिका प्रहेलिका ।
जनश्रुतिः किंवदन्ती, वार्त्तैतिह्यं पुरातनी ॥२९९॥

---

०१ अवान्तरप्रकरणाना विश्रामो ग्रन्थावयय इत्यर्थः । तदाह्निकमित्युच्यत, यदनेकार्थः "आह्निकं स्यात्पुनरह्नर्निर्वर्त्ये नित्यकर्मणि । भोजने ग्रन्थभागे चेति " ग्रन्थभागे-ग्रन्थावयवे इति तट्टीका । ०२ आदिग्रहणात् अध्यायः उच्छ्वासः अङ्कः सर्गः इत्यादयो ग्रन्थावयवविशेषा ज्ञेयाः ।

वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तोऽथाह्वयोऽभिधा ।
गोत्रसंज्ञानामधेयाख्याह्वाऽभिख्याश्च नाम च ॥२६०॥
सम्बोधनमामन्त्रणमाह्वानं त्वभिमन्त्रणम् ।
आकारणं हवो हूतिः, संहूतिर्बहुभिः कृता ॥२६१॥
उदाहार उपोद्घात, उपन्यासश्च वाङ्मुखम् ।
व्यवहारो विवादः स्यात्, शपथः शपनं शपः ॥२६२॥
उत्तरं तु प्रतिवचः, प्रश्नः पृच्छाऽनुयोजनम् ।
कथङ्कथिकता चाथ, देवप्रश्न उपश्रुतिः ॥२६३॥
चटु चाटु प्रियप्रायं, प्रियसत्यं तु सूनृतम् ॥
सत्यं सम्यक् समीचीनमृतं तथ्यं यथातथम् ॥२६४॥
यथास्थितं च सद्भूतेऽलीके तु वितथानृते ।
अथ क्लिष्टं सङ्कुलं च, परस्परपराहतम् ॥२६५॥
सान्त्वं सुमधुरं ग्राम्यमश्लीलं म्लिष्टमस्फुटम् ।
लुप्तवर्णपदं ग्रस्तमवाच्यं स्यादनक्षरम् ॥२६६॥
अम्बूकृतं सथूत्कारे, निरस्तं त्वरयोदितम् ।
आम्रेडितं द्विस्त्रिरुक्तमबद्धं तु निरर्थकम् ॥२६७॥
पृष्ठमांसादनं तद्यत्, परोक्षे दोषकीर्त्तनम् ।
मिथ्याभियोगोऽभ्याख्यानं, सङ्केतं हृदयङ्गमम् ॥२६८॥

परुषं निष्ठुरं रूक्षं, विक्रुष्टमथ घोषणा ।
उच्चैर्घुष्टं वर्णनेडा, स्तवः स्तोत्रं स्तुतिर्नुतिः ॥२६९॥

श्लाघा प्रशंसाऽर्थवादः, सा तु मिथ्या विकत्थनम् ।
जनप्रवादः कौलीनं, विगानं वचनीयता ॥२७०॥

स्यादवर्ण उपक्रोशो, वादो निष्पर्य्यपात् परः ।
गर्हणा धिक्क्रिया निन्दा, कुत्सा क्षेपो जुगुप्सनम् ॥२७१॥

आक्रोशाभीषङ्गाक्षेपाः, शापः स क्षारणा रते ।
विरुद्धशंसनं गालिराशीर्मङ्गलशंसनम् ॥ २७२ ॥

श्लोकः कीर्तिर्यशोऽभिख्या, समाज्ञा रुशती पुनः ।
अशुभा वाक् शुभा कल्या चर्चरी चर्भटी समे ॥२७३॥
यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम् ।
आपृच्छाऽऽलापः सम्भाषोऽनुलापः स्यान्मुहुर्वचः ॥२७४॥

अनर्थकं तु प्रलापो, विलापः परिदेवनम् ।
उल्लापः काकुवागन्योऽन्योक्तिः संलापसंकथे ॥२७५॥
विप्रलापो विरुद्धोक्तिरपलापस्तु निह्नवः ।
सुप्रलापः सुवचनं, सन्देशवाक्तु वाचिकम् ॥२७६॥

आज्ञा शिष्टिर्निराङ्निभ्यो देशो नियोगशासने ।
अववादोऽन्यथाहूय प्रेषणं प्रतिशासनम् ॥२७७॥

संवित्सन्धाऽऽस्थाऽभ्युपायः, संप्रत्याङ्भ्यः परः श्रवः ।
अङ्गीकारोऽभ्युपगमः, प्रतिज्ञाऽऽगूश्च सङ्गरः ॥२७८॥

गीतनृत्यवाद्यत्रयं, नाट्यं तौर्यत्रिकं च तत् ।
सङ्गीतं प्रेक्षणार्थेऽस्मिन्, शास्त्रोक्ते नाट्यधर्मिका ॥२७९॥

गीतं गानं गेयं गीतिर्गान्धर्वमथ नर्तनम् ।
नटनं नृत्यं नृत्तं च, लास्यं नाट्यं च ताण्डवम् ॥२८०॥

मण्डलेन तु यन्नृत्यं, स्त्रीणां हल्लीसकं हि तत् ।
पानगोष्ठ्यामुच्चतालं, रणे वीरजयन्तिका ॥२८१॥

स्थानं नाट्यस्य रङ्गः स्यात्पूर्वरङ्ग उपक्रमः ।
अङ्गहारोऽङ्गविक्षेपो, व्यञ्जकोऽभिनयः समौ ॥२८२॥

स चतुर्विध आहार्यो रचितो भूषणादिना ।
वचसा वाचिकोऽङ्गेनाङ्गिकः सत्त्वेन सात्त्विकः ॥२८३॥

स्यान्नाटकं प्रकरणं, भाणः प्रहसनं डिमः ।
व्यायोगसमवकारौ, वीथ्यङ्केहामृगा इति ॥२८४॥

अभिनेयप्रकारा स्युर्भाषा षट् संस्कृतादिका. ।
भारती सात्वती कौशिक्यारभट्यौ च वृत्तय   ॥२८५॥

वाद्यं वादित्रमातोद्यं, तूर्य्यं तूर्यं स्मरध्वजं ।
ततं वीणाप्रभृतिकं, तालप्रभृतिकं घनं   ॥२८६॥

वंशादिकं तु शुषिरमानद्धं मुरजादिकम् ।
वीणा पुनर्घोषवती, विपञ्ची कण्ठकूणिका   ॥२८७॥

वल्लकी साऽथ तन्त्रीभि, सप्तभि परिवादिनी ।
शिवस्य वीणा नालम्बी, सरस्वत्यास्तु कच्छपी ॥२८८॥

नारदस्य तु महती गणाना तु प्रभावती ।
विश्वावसोस्तु बृहती, तुम्बुरोस्तु कलावती   ॥२८९॥

चण्डालाना तु कटोलवीणा चाण्डालिका च सा ।
काय कोलम्बकैस्तस्या, उपनाहो निबन्धनम् ॥२९०॥

दण्ड पुन प्रवाले स्यात्ककुम्भस्तु प्रसवके ।
मूले वंशशलाका स्यात्कलिका कूणिकापि च   ॥२९१॥

कालस्य क्रियया मान, ताल साम्य पुनर्लये ।
द्रुत विलम्बित मध्यमोघस्तत्व घनं क्रमात्   ॥२९२॥

मृदङ्गो मुरजः सोऽङ्क्यालिङ्ग्यूर्ध्वकैरिति त्रिधा ।
स्यायश पटहो ढक्का, भेरी दुन्दुभिरानकः ॥२९३॥

पटहोऽथ शारिका स्यात्कोणो वीणादिवादनम् ।
शृङ्गारहास्यकरुणा, रौद्रवीरभयानकाः ॥२९४॥

बीभत्साद्भुतशान्ताश्च, रसा भावा पुनस्त्रिधा ।
स्थायिसात्त्विकसञ्चारिप्रभेदैः स्याद्रतिः पुनः ॥२९५॥

रागोऽनुरागोऽनुरतिर्हासस्तु हसनं हसः ।
घर्घरो हासिका हास्यं, तत्रादृष्टरदे स्मितम् ॥२९६॥

वक्रोष्ठिकाऽथ हसितं, किञ्चिद्दृष्टरदाङ्कुरे।
विच्छिन्नचूते विहसितमट्टहासो महीयसि ॥२९७॥

अतिहासस्त्वनुस्यूतेऽपहासोऽकारणात्कृते ।
सोत्प्रासे त्वाच्छुरितकः, हसनं स्फुरदोष्ठकः ॥२९८॥

शोकः शुक् शोचनं खेदः, क्रोधो मन्युः क्रुधा रुषा ।
क्रुत् कोपः प्रतिघो रोषो, रुट् चोत्साहः प्रगल्भता ।२९९।

अभियोगोद्यमौ प्रौढिरुद्योगः कियदेतिका ।
अध्यवसाय ऊर्जोऽथ वीर्यं सोऽतिशयान्वितः ॥३००॥

भयं भीर्भीतिरातङ्क, आशङ्का साध्वसं दरः ।
भिया च तच्चाहिभयं, भूपतीनां स्वपक्षजम् ॥३०१॥
अदृष्टं वह्नितोयादेर्दृष्टं स्वपरचक्रजम् ।
भयङ्करं प्रतिभयं, भीमं भीष्मं भयानकम् ॥३०२॥
भीषणं भैरवं घोरं, दारुणं च भयावहम् ।
जुगुप्सा तु घृणोऽथ स्याद्विस्मयेश्चित्रमद्भुतम् ॥३०३॥
चोद्याश्चर्ये शमः शान्तिः, शमथोपशमावपि ।
तृष्णाक्षयः स्थायिनोऽमी, रसानां कारणं क्रमात् ॥३०४॥
स्तम्भो जाड्यं स्वेदो घर्मनिदाघौ पुलकः पुनः ।
रोमाञ्चः कण्टको रोमविकारो रोमहर्षणम् ॥३०५॥
रोमोद्गम उद्धुषणमुल्लुकसनमित्यपि ।
स्वरभेदस्तु कल्लत्वं, स्वरे कम्पस्तु वेपथुः ॥३०६॥
वैवर्ण्यं कालिकाऽथाश्रु बाष्पो नेत्राम्बु रोदनम् ।
अस्रमस्रु प्रलयस्त्वचेष्टतेत्यष्ट सात्त्विकाः ॥३०७॥
धृतिः सन्तोषः स्वास्थ्यं स्यादाध्यानं स्मरणं स्मृतिः ।
मतिर्मनीषा बुद्धिर्धीर्धिषणाज्ञप्तिचेतनाः ॥३०८॥

प्रतिभा प्रतिपत्प्रज्ञाप्रेक्षाचिदुपलब्धयः ।
संवित्तिः शेमुषी दृष्टिः, सा मेधा धारणक्षमा ॥३०९॥
पण्डी तत्त्वानुगा मोक्षे ज्ञानं विज्ञानमन्यतः ।
शुश्रूषा श्रवणं चैव, ग्रहणं धारणं तथा ॥३१०॥
ऊहोऽपोहोऽर्थविज्ञानं, तत्त्वज्ञानं च धीगुणाः ।
व्रीडा लज्जा मन्दाक्षं ह्रीस्त्रपा साऽपत्रपाऽन्यतः ॥३११॥
जाड्यं मौर्ख्यं विषादोऽवसादः सादो विषण्णता ।
मदो मुन्मोहसम्भेदो, व्याधिस्त्वाधी रुजाकरः ॥३१२॥
निद्रा प्रमीला शयनं, संवेशः स्वाप-संलयाः ।
नन्दीमुखी श्वासहेतिस्तन्द्रा सुप्तं तु साधिका ॥३१३॥
औत्सुक्यं रणरणकोत्कण्ठे आयल्लकारती ।
हल्लेखोत्कलिके चायावहित्थाकारगोपनम् ॥३१४॥
शङ्काऽनिष्टोत्प्रेक्षणं स्याच्चापलं त्वनवस्थितिः ।
आलस्यं तन्द्रा कौसीद्यं, हर्षश्चित्तप्रसन्नता ॥३१५॥
ह्लादः प्रमोदः प्रमदो, मुत्प्रीत्यामोदसम्मदाः ।
आनन्दानन्दथू गर्वस्त्वहङ्कारोऽवलिप्तता ॥३१६॥

दर्पोऽभिमानो ममता, मानश्चित्तोन्नतिः स्मयः ।
स मिथोऽहमहमिका, या तु सम्भावनाऽऽत्मनि ॥३१७॥

दर्पात्साऽहोपुरुषिका, स्यादहम्पूर्विका पुनः ।
अहं पूर्वमहं पूर्वमित्युग्रत्वं तु चण्डता ॥३१८॥

प्रबोधस्तु विनिद्रत्वं, ग्लानिस्तु बलहीनता ।
दैन्यं कार्पण्यं श्रमस्तु, क्लमः क्लेशः परिश्रमः ॥३१९॥

प्रयासायासव्यायामा, उन्मादश्चित्तविप्लवः ।
मोहो मौढ्यं चिन्ता ध्यानममर्षः क्रोधसम्भवः ॥३२०॥

गुणो जिगीषोत्साहवांस्त्रासस्त्वाकस्मिकं भयम् ।
अपस्मारः स्यादावेशो, निर्वेदः स्वावमाननम् ॥३२१॥

आवेगस्तु त्वरिस्तूर्णिः, संवेगः सम्भ्रमस्त्वरा ।
वितर्कः स्यादुल्लयनं, परामर्शो विमर्शनम् ॥३२२॥

अध्याहारस्तर्क ऊहोऽसूयान्यगुणदूषणम् ।
मृतिः संस्था मृत्युकालौ, परलोकगमोऽत्ययः ॥३२३॥

पञ्चत्वं निधनं नाशो, दीर्घनिद्रा निमीलनम् ।
दिष्टान्तोऽस्तं कालधर्मोऽवसानं सा तु सर्वगा ॥३२४॥

मरको मारिश्चैयस्त्रिशदमी व्यभिचारिण ।
स्यु· कारणानि कार्य्याणि, सहचारीणि यानि च ॥२२५॥

रत्यादेः स्थायिनो लोके, तानि चेत्काव्यनाट्ययो ।
विभावा अनुभावाश्च, व्यभिचारिण एव च ॥२२६॥

व्यक्त. स तैर्विभावाद्यै, स्थायिभावो भवेद्रस· ।
पात्राणि नाट्येऽधिकृतास्तत्तद्वेषस्तु भूमिका ॥२२७॥

शैलूषो भरतः सर्वकेशी भरतपुत्रकः ।
धर्म्मीपुत्रो रङ्गजायाऽऽजीवो रङ्गावतारक ॥२२८॥

नट कृशाश्वी शैलाली, चारणस्तु कुशीलव ।
भ्र-भ्रु-भ्रू-भृ-परः कुंसो, नट. स्त्रीवेषधारक ॥२२९॥

वेश्याचार्य्य· पीठमर्द, सूत्रधारस्तु सूचक· ।
नन्दी तु पाठको नान्द्याः, पार्श्वस्थ पारिपार्श्विक ॥२३०॥

वासन्तिक केलिकिलो, वैहासिको विदूषक ।
प्रहासी प्रीतिदश्चाय, पिङ्ग पल्लविको विट ॥२३१॥

पिता त्वावुक आवुत्त-भावुकौ भगिनीपतौ ।
भावो विद्वान् युवराज , कुमारो भर्तृदारक ॥२३२॥

बाला वासूर्मर्षि आर्य्यो, देवो भट्टारको नृपः ।
राष्ट्रियो नृपतेः स्यालो, दुहिता भर्तृदारिका ॥२३३॥
देवी कृताभिषेकाऽन्या भट्टिनी गणिकाऽज्जुका ।
नीचा चेटी सखीहूतौ हण्डे हञ्जे हलाः क्रमात् ॥२३४॥
अब्रह्मण्यमवध्योक्तौ, ज्यायसी तु स्वसाऽत्तिका ।
भर्त्ताऽऽर्य्यपुत्रो माताऽम्बा भदन्ताः सौगतादयः ॥२३५॥
पूज्ये तत्रभवानत्रभवांश्च भगवानपि ।
पादो भट्टारको देवैः, प्रयोज्याः पूज्यनामतः ॥२३६॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामभिधानचिन्तामणौ
नाममालायां देवकाण्डो द्वितीयः ॥२॥

# अभिधानचिन्तामणौ ।

## मर्त्यकाण्डः तृतीयः ।

मर्त्यः पञ्चजनो भूस्पृक्, पुरुषः पूरुषो नरः ।
मनुष्यो मानुषो ना विट्, मनुजो मानवः पुमान् ॥३३७॥
बालः पाकः शिशुर्डिम्भः, पोतः शावः स्तनन्धयः ।
पृथुकोऽर्भोत्तानशयौ, क्षीरकण्ठः कुमारकः ॥३३८॥
शिशुत्वं शैशवं बाल्यं, वयस्थस्तरुणो युवा ।
तारुण्यं यौवनं वृद्धः, प्रवयाः स्थविरो जरन् ॥३३९॥
जरी जीर्णो यातयामो, जीनोऽथ विस्रसा जरा ।
वार्द्धकं स्थाविरं ज्यायान्, वर्षीयान् दशमीत्यपि ॥३४०॥
विद्वान् सुधीः कविविचक्षणलब्धवर्णाः
ज्ञः प्राप्तरूपकृतिकृष्ट्यभिरूपधीराः ।
मेधाविकोविदविशारदसूरिदोष-
ज्ञाः प्राज्ञपण्डितमनीषिबुधप्रबुद्धाः ॥३४१॥

व्यक्तो विपश्चित्सङ्ख्यावान्. सन् प्रवीणे तु शिक्षितः ।
निष्णातो निपुणो दक्षः, कर्म्म-हस्त-मुखाः कृतात् ।३४२॥

कुशलश्चतुरोऽभिज्ञविज्ञवैज्ञानिकाः पटुः ।
छेको विदग्धे प्रौढस्तु, प्रगल्भः प्रतिभान्वितः ॥३४३॥

कुशाग्रीयमतिः सूक्ष्मदर्शी तत्कालधीः पुनः ।
प्रत्युत्पन्नमतिर्दूराद्यः पश्येद्दीर्घदर्श्यसौ ॥३४४॥

हृदयालुः सहृदयश्चिद्रूपोऽप्यथ संस्कृते ।
व्युत्पन्नप्रहतक्षुण्णा, अन्तर्वाणिस्तु शास्त्रवित् ॥३४५॥

वागीशो वाक्पतौ वाग्ग्मी, वाचोयुक्तिपटुः प्रवाक् ।
समुखो वावदूकोऽथ वद्रो वक्तो वदावदः ॥३४६॥

स्याद् जल्पाकस्तु वाचालो, वाचाटो बहुगर्ह्यवाक् ।
यद्वदोऽनुत्तरे दुर्वाक् कद्वदे स्याद्याचरः ॥३४७॥

हीनवादिन्येडमूकोनेडमूकौ त्ववाक्श्रुतौ ।
रवणः शब्दनस्तुल्यौ, कुवादकुचरौ समौ ॥३४८॥

लोहलोऽस्फुटवाग् मूकोऽवागसौम्यस्वरोऽस्वरः ।
वेदितौ विदुरो विन्दुर्वन्दारुस्त्वभिवादकः ॥३४९॥

आशंसुराशंसितरि, कद्वरस्त्वतिकुत्सितः ।
निराकरिष्णुः क्षिप्नुः स्याद्विकासी तु विकस्वरः ॥३५०॥

दुर्मुखे मुखराबद्धमुखौ शक्लः प्रियंवदः ।
दानशौण्डः सवदान्यो, वदन्योऽप्यथ बालिशः ॥३५१॥

मूढो मन्दो यथाजातो, बालो मातृमुखो जडः ।
मूर्खोऽमेधो विवर्णाज्ञौ, वैधेयो मातृशासितः ॥३५२॥

देवानांप्रियजाल्मौ च, दीर्घसूत्रश्चिरक्रियः ।
मन्दः क्रियासु कुण्ठः स्यात्, क्रियावान् कर्मसूद्यतः ॥३५३॥

कर्मक्षमोऽलङ्कर्मीणः, कर्मशूरस्तु कर्मठः ।
कर्मशीलः कार्म आयःशूलिकस्तीक्ष्णकर्मकृत् ॥३५४॥

सिंहसंहननः स्वङ्गः, स्वतन्त्रो निरवग्रहः ।
यथाकामी स्वरुचिः, स्वच्छन्दः स्वैर्यपावृतः ॥३५५॥

यदृच्छा स्वैरिता स्वेच्छा, नाथवान् निघ्नगृह्यकौ ।
तन्त्रायत्तवशाधीनच्छन्दवन्तः परतरे ॥३५६॥

लक्ष्मीवान् लक्ष्मणः श्रीलः, इभ्य आढ्यो धनीश्वरः ।
ऋद्धो विभूतिः संपत्तिर्लक्ष्मीः श्रीर्ऋद्धिसम्पदः ॥३५७॥

दरिद्रो दुर्विधो दुःस्थो, दुर्गतो निःस्वकीकटौ ।
अकिञ्चनोऽधिपस्त्वीशो, नेता परिवृढोऽधिभूः ॥३५८॥
पतीन्द्रस्वामिनाथार्याः प्रभुर्भर्त्तेश्वरो विभुः ।
ईशितेनो नायकश्च, नियोज्यः परिचारकः ॥३५९॥
डिङ्गरः किङ्करो भृत्यश्चेटो गोप्यः पराचितः ।
दासः प्रेष्यः परिस्कन्दो, भुजिष्यपरिकर्म्मिणौ ॥३६०॥
परान्नः परपिण्डादः, परजातः परैधितः ।
भृतके भृतिभुग् वैतनिकः कर्म्मकरोऽपि च ॥३६१॥
स निर्भृतिः कर्म्महरो, भृतिः स्यान्निष्क्रयः पणः ।
कर्म्मण्या वेतनं मूल्यं, निर्वेशो भरणं विधा ॥३६२॥
भर्म्मण्या भर्म भृत्या च, भोगस्तु गणिकाभृतिः ।
खलपूः स्याद्बहुकरो, भारवाहस्तु भारिकः ॥३६३॥
वार्त्तावहे वैवधिको, भारे विवधवीवधौ ।
काचः शिक्यं तदालम्बो, भारयष्टिर्विहङ्गिका ॥३६४॥
शूरश्चारभटो वीरो, विक्रान्तश्चाथ कातरः ।
दरितश्चकितो भीतो, भीरुर्भीरुक-भीलुकौ ॥३६५॥

विहस्तव्याकुलौ व्यग्रे, कान्दिशीको भयद्रुते ।
उत्पिञ्जलसमुत्पिञ्जपिञ्जला भृशमाकुले ॥३६६॥

महेच्छे तुङ्गोदारौ, दान्तोदीर्णमहाशयाः ।
महामना महात्मा च, कृपणस्तु मितम्पचः ॥३६७॥

कीनाशस्तद्धनः क्षुद्रैकर्दर्यदृढमुष्टयः ।
किम्पचानो दयालुस्तु, कृपालुः करुणापरः ॥३६८॥

सूरतोऽप दया शूकः, कारुण्यं करुणा घृणा ।
कृपानुकम्पानुक्रोशो, हिंस्रे शरारुघातुकौ ॥३६९॥

व्यापादनं विशरणं प्रमयः प्रमापणं,
निर्ग्रन्थनं प्रमथनं कदनं निबर्हणम् ।
निस्तर्हणं विशसनं क्षणनं परासनं,
प्रोज्जासनं प्रशमनं प्रतिघातनं वधः ॥३७०॥

प्रवासनोद्वासनघातनिर्वासनानि संज्ञपनिशुम्भहिंसाः ।
निर्वापणालम्भनिसूदनानि, निर्यातनोन्मन्थसमापनानि ॥३७१॥

अपासनं वर्जनमारपिञ्जा, निष्कारणाकाथविशारणानि ।
स्युः कर्त्तने कल्पने वर्द्धने च, छेदश्च घातोद्यत आततायी ॥

स शैर्षच्छेदिकः शीर्षच्छेद्यो यो वधमर्हति ।
प्रमीत उपसम्पन्नः, परेतप्रेतसंस्थिताः ॥३७३॥

नामालेख्य-यशः-शेषो, व्यापन्नोऽपगतो मृतः ।
परासुस्तद्दहे दानं, तदर्थमौर्ध्वदेहिकम् ॥३७४॥

मृतस्नानमपस्नानं, निवापः पितृतर्पणम् ।
चितिचित्याचितास्तुल्या, ऋजुस्तु प्राञ्जलोऽञ्जसः॥३७५॥

दक्षिणे सरलोदारौ, शठस्तु निकृतोऽनृजुः ।
क्रूरे नृशंसनिस्त्रिंशपापा धूर्तस्तु वञ्चकः ॥३७६॥

व्यंसकः कुहको दाण्डाजिनिको मायिजालिकौ ।
माया तु शठता शाठ्यं, कुसृतिर्निकृतिश्च सा ॥३७७॥

कपटं कैतवं दम्भः, कूटं छद्मोपधिश्छलम् ।
व्यपदेशो मिषं लक्षं, निभं व्याजोऽथ कुक्कुटिः ॥३६८॥

कुहना दम्भचर्या च, वञ्चनं तु प्रतारणम् ।
व्यलीकमतिसन्धानं, साधौ सभ्यार्य्यसज्जनाः ॥३७९॥

दोषैकदृक् पुरोभागी[2], कर्णेजपस्तु दुर्जनः[3] ।
पिशुनः सूचको नीचो[5], द्विजिह्वो मत्सरी खलः ॥३८०॥
व्यसनार्त्तस्तूपरक्तश्चौरस्तु प्रतिरोधकः ।
दस्युः पाटच्चरः स्तेनस्तस्करः पारिपन्थिकः ॥३८१॥
परिमोषिपरास्कन्दिनैकागारिकमलिम्लुचाः ।
यः पश्यतो हरेदर्थं, स चोरः पश्यतोहरः ॥३८२॥
चौर्यं तु चौरिका स्तेयं[3], लोप्त्रं त्वपहृतं धनम् ।
यद्भविष्यो[1] दैवपरोऽथालस्यः शीतकोऽलसः ॥३८३॥
मन्दस्तुन्दपरिमृजोऽनुष्णो[6] दक्षस्तु पेशलः ।
पटूष्णोष्णकर्मोत्थानचतुराश्चाथ तत्परः ॥३८४॥
आसक्तः प्रवणः प्रह्वः, प्रसितश्च परायणः ।
दानोदारः स्थूललक्षदानशौण्डौ[2] बहुप्रदे[3] ॥३८५॥
दानमुत्सर्जनं[2] त्यागः, प्रदेशनं विसर्जनं[5] ।
विहापितं[1] वितरणं[7], स्पर्शनं प्रतिपादनम् ॥३८६॥
विश्राणनं[10] निर्वपणमपवर्जनमंहतिः[12] ।
अर्थव्ययज्ञः सुकलो[4], याचकस्तु वनीपकः ॥३८७॥
मार्गणोऽर्थी याचनकस्तर्ककोऽथार्थनैषणा ।
अर्दना प्रणयो[4] याच्ञा, याचनाऽभ्येषणा सनिः ॥३८८॥

उत्पतिष्णुरुत्पतिताऽलङ्करिष्णुस्तु मण्डनः ।
भविष्णुर्भविता भूष्णुः, समौ वर्त्तिष्णुवर्त्तनौ ॥३८९॥

विसृत्वरो विसृमरः, प्रसारी च विसारिणि ।
लज्जाशीलोऽपत्रपिष्णुः, सहिष्णुः क्षमिता क्षमी ॥३९०॥

तितिक्षुः सहनः क्षन्ता, तितिक्षौ सहनं क्षमौ ।
ईर्ष्यालुः कुहनोऽक्षान्तिरीर्ष्यो क्रोधी तु रोषणः ॥३९१॥

अमर्षणः क्रोधनश्च, चण्डस्त्वत्यन्तकोपनः ।
बुभुक्षितः स्यात् क्षुधितो, जिघत्सुरशनायितः ॥३९२॥

बुभुक्षायामशनाया, जिघत्सा रोचको रुचिः ।
पिपासुस्तृषितस्तृष्णक्, तृष्णा तर्षोऽपलासिका ॥३९३॥

पिपासा तृट् तृषोदन्या, धीतिः पानेऽथ शोषणम् ।
रसादानं भक्षकस्तु, घस्मरोऽद्मर आशितः ॥३९४॥

भक्तमन्नं कूरमन्धो, भिस्सा दीदिविरोदनः ।
अशनं जीवनकं च, याजो वाजः प्रसादनम् ॥३९५॥

भिस्सटा दग्धिका सर्वरसाग्रं मण्डमत्र तु ।
दधिजे मस्तु भक्तोत्थे, निस्रावाचाममासराः ॥३९६॥

श्राणा विलेपी तरला, यवागूरुष्णिकापि च ।
सूपः स्यात्प्रहितं सूदो , व्यञ्जनं तु घृतादिकम् ॥३९७॥

तुल्यौ तिलान्ने कृसरत्रिसरावथ पिष्टकः ।
पूपोऽपूपः पूलिका तु, पोलिका पोलि-पूपिकाः ॥३९८॥

पूपल्यथेषत्पक्के स्युरभ्युषोभ्योषपौल्यः ।
निष्ठानं तु तेमनं स्यात्करम्भो दधिसक्तवः ॥३९९॥

घृतपूरो घृतवरः, पिष्टपूरश्च घार्त्तिकः ।
चमसी पिष्टवर्त्तिः स्याद्वटकस्त्ववसेकिमः ॥४००॥

भृष्टा यवाः पुनर्धाना, धानाचूर्णं तु सक्तवः ।
पृथुकश्चिपिटस्तुल्यौ, लाजाः स्युः पुनरक्षताः ॥४०१॥

गोधूमचूर्णं समिता, यवक्षोदे तु चिक्कसः ।
गुडे इक्षुरसक्वाथः, शर्करा तु सितोपला ॥४०२॥

सिता च मधुधूलिस्तु, खण्डस्तद्विकृतिः पुनः ।
मत्स्यण्डी फाणितं चापि, रसालायां तु मार्जिता ॥४०३॥

शिखरिण्यथ यूषयूषा, रसो दुग्धं तु सोमजम् ।
गोरसः क्षीरमूधस्यं, स्तन्यं पुंसवनं पयः ॥४०४॥

पयस्यं घृतदध्यादि, पेयूषोऽभिनवं पयः ।
उभे क्षीरस्य विकृती, किलाटी कूर्चिकापि च ॥४०५॥

पायसं परमान्नं च, क्षैरेयी क्षीरजं दधि ।
गोरसश्च तद्घनं, द्रप्सं पत्रेलमित्यपि ॥४०६॥

घृतं हविर्द्यमाज्यं च, हविराग्नारसर्पिषी ।
ह्योगोदोहोद्भवं हैयङ्गवीनं शारजं पुनः ॥४०७॥

दधिसारं तक्रसारं, नवनीतं नवोद्धृतम् ।
दण्डाहतं कालशेयवोलौरिष्टानि गोरसैः ॥४०८॥

रसायनमयार्घाम्बूदश्वित् श्वेतं समोदकम् ।
तक्रं पुनः पादजलं, मथितं वारिवर्जितम् ॥४०९॥

सार्पिष्कं दाधिकं सर्पिर्दधिभ्यां संस्कृतं क्रमात् ।
लवणोदकाभ्यां तु दकलावणिकमुदश्विति ॥४१०॥

औदश्वितमौदश्वित्कं, लवणे स्यात्तु लावणम् ।
पैठरोख्ये उखासिद्धे, प्रयस्तं तु सुसंस्कृतम् ॥४११॥

पक्वे राद्धं च सिद्धं च, भ्रष्टं पक्वं विनाम्भुना ।
भ्रष्टामिषं भटित्रं स्याच्छूल्यं भरुटकं च तत् ॥४१२॥

शूल्यं शूलाकृतं मांसं, निष्क्वाथो रसकः समौ।
प्रणीतमुपसम्पन्नं, स्निग्धे मसृणचिक्कणे ॥४१३॥
पिच्छिलं तु विजिविलं, विजलं विजिलं च तत्।
भावितं तु वासितं स्यात्तुल्ये संसृष्टशोधिते ॥४१४॥
काञ्चिकं काञ्जिकं धान्याम्लारनाले तुषोदकम्।
कुल्माषाभिषुतावन्तिसोमशुक्तानि कुञ्जलम् ॥४१५॥
चुक्रं धातुघ्नमुद्वाहं, रक्षोघ्नं कुण्डगोलकम्।
महारसं सुवीराम्लं, सौवीरं प्रक्षणं पुनः ॥४१६॥
तैलं स्नेहोऽभ्यञ्जनं च, वेसवार उपस्करः।
स्यात्तिन्तिडीकं तु चुक्रं, वृक्षाम्लं चाम्लवेतसे ॥४१७॥
हरिद्रा काञ्चनी पीता, निशाख्या वरवर्णिनी।
क्षवः क्षुताभिजननो, राजिका राजसर्षपः ॥४१८॥
आसुरी कृष्णिका श्यामा, कुस्तुम्बुरु तु धान्यकम्।
धन्या धन्याकं धान्याकं, मरिचं कृष्णमूषणम् ॥४१९॥
कोलकं वेल्लजं धर्मपत्तनं यवनप्रियम्।
शुण्ठी महौषधं विश्वा, नागरं विश्वभेषजम् ॥४२०॥

वैदेही पिप्पली कृष्णोपकुल्या मागधी कणा,।
तन्मूलं ग्रन्थिकं सर्वग्रन्थिकं चटकाशिरः ॥४२१॥

त्रिकटु त्र्यूषणं व्योषमजाजी जीरकः कणा ।
सहस्रवेधि बाल्हीकं, जतुकं हिङ्गु रामठम् ॥४२२॥

न्यादः स्वदनं खादनमदनं, निघसो वल्भनमभ्यवहारः ।
जग्धिर्जक्षणभक्षणलेहाः, प्रत्यवसानं घसिराहारः ॥४२३॥

प्सानौ वल्भनविप्साणौ, भोजनं जेमनौदनं ।
चर्वणं चूर्णनं दन्तैर्जिह्वास्वादस्तु लेहनम् ॥४२४॥

कल्यवर्तः प्रातराशः, सग्धिस्तु सहभोजनम् ।
ग्रासो गुडेरकः पिण्डो, गडोलः कवलो गुडः ॥४२५॥

गण्डोलः कवलस्तृप्ते, त्वाघ्रातसुहिताशिताः ।
तृप्तिः सौहित्यमाघ्राणमथ भुक्तसमुज्झिते ॥४२६॥

फेला पिण्डोलिः फेली च, स्योदरंपूरके पुनः ।
कुक्षिम्भरिरात्मम्भरिरुदरम्भरिरप्यथ ॥४२७॥

आद्यूनः स्यादौदरिको, विजिगीषाविवर्जिते ।
उदरपिशाचः सर्वान्नीनः सर्वान्नभक्षकः ॥४२८॥

शाष्कुलैः पिशिताश्युन्मादिष्णुस्तून्मादसंयुतः ।
गृध्नुस्तु गर्द्धनस्तृष्णक्, लिप्सुर्लुब्धोऽभिलाषुकः ॥४२९॥

लोलुपो लोलुभो लोभस्तृष्णा लिप्सा वशः स्पृहा ।
काङ्क्षाऽऽशंसा गर्द्धवाञ्छाऽऽशेच्छेहातृड्मनोरथाः ॥४३०॥

कामोऽभिलाषोऽभिध्या तु, परस्वेहोद्धतः पुनः ।
अविनीतो विनीतस्तु, निभृतः प्रसृतोऽपि च ॥४३१॥

विधेये विनयस्थः स्यादाश्रवो वचने स्थितः ।
वश्यः प्रणेयो धृष्टस्तु, वियातो धृष्णुधृष्णजौ ॥४३२॥

वीक्षापन्नो विलक्षोऽथाधृष्टे शालीनशारदौ ।
शुभंयुः शुभसंयुक्तः, स्यादहंयुरहङ्कृतः ॥४३३॥

कामुकः कमिता कम्रोऽनुकः कामयिताऽभिकः
कामनः कमरोऽभीकः, पद्यमद्रस्तु विह्वलः ॥४३४॥

व्यमना हर्षमाणस्तु, प्रमना हृष्टमानसः ।
विकुर्वाणो विचेतास्तु, दुरन्तर्वि-परो मनाः ॥४३५॥

---

•१ गृ ग्नी, पन्नवेदनुम्यरेशाभेद "तन्देव मेऽनुप्रता प्रतान्य दोनेष, इति भाषणाम्" प्रदस्त्व निर्नाशयति तहीदा ।

मत्ते शौण्डोत्कटक्षीबाः, उत्कस्तूत्सुक उन्मनाः ।
उत्कण्ठितोऽभिशस्ते तु, वाच्यक्षारितदूषिताः ॥४३६॥

गुणैः प्रतीते त्वाहतलक्षणः कृतलक्षणः ।
निर्लक्षणस्तु पाण्डुरपृष्ठः सङ्कसुकोऽस्थिरे ॥४३७॥

तूष्णींशीलस्तु तूष्णीको, विवशोऽनिष्टदुष्टधीः ।
बद्धो निगडितो नद्धः, कीलितो यन्त्रितः सितः ॥४३८॥

सन्दानितः संयतश्च, स्यादुद्दानं तु बन्धनम् ।
मनोहतः प्रतिहतः, प्रतिबद्धो हतश्च सः ॥४३९॥

प्रतिक्षिप्तोऽधिक्षिप्तोऽवकृष्टनिष्कासितौ समौ ।
आत्तगन्धेऽभिभूतोऽपध्वस्ते न्यक्कृतधिक्कृतौ ॥४४०॥

निकृतस्तु विप्रकृतो, न्यक्कारस्तु तिरस्क्रिया ।
परिभावो विप्रकारः, परा-पर्यभितो भवः ॥४४१॥

अत्याकारो निकारश्च, विप्रलब्धस्तु वञ्चितः ।
स्वप्नक् शयालुर्निद्रालुर्घूर्णितः प्रचलायितः ॥४४२॥

निद्राणः शयितः सुप्तो, जागरूकस्तु जागरी ।
जागर्या स्याज्जागरणं, जागरी जागरोऽपि च ॥४४३॥

मनसः कर्म सङ्कल्पः, स्यादथो शर्म निर्वृतिः ।
सातं सौख्यं सुखं दुःखं त्वसुखं वेदना व्यथा ॥१३७०॥
पीडा बाधाऽर्त्तिरामीलं, कृच्छ्रं कष्टं प्रसूतिजम् ।
आमनस्यं प्रगाढं च, स्यादाधिर्मानसी व्यथा ॥१३७१॥
सपत्राकृति-निष्पत्राकृती त्वत्यन्तपीडने ।
क्षुज्जाठराग्निजा पीडा, व्यापादो द्रोहचिन्तनम् ॥१३७२॥
उपज्ञा ज्ञानमाद्यं स्याच्चर्चा सङ्ख्या विचारणा ।
वासना भावना संस्कारोऽनुभूताद्यविस्मृतिः ॥१३७३॥
निर्णयो निश्चयोऽन्तः सम्प्रधारणा समर्थनम् ।
अविद्याऽहम्मतिरज्ञाने, भ्रान्तिर्मिथ्यामतिर्भ्रमः ॥१३७४॥
सन्देहद्वापरौऽऽरेका, विचिकित्सा च संशयः ।
परभागो गुणोत्कर्षो, दोषे त्वादीनवास्रवौ ॥१३७५॥
स्याद् रूपं लक्षणं भावश्चात्मप्रकृतिरीतयः ।
सहजो रूपतत्त्वं च, धर्मसर्गौ निसर्गवत् ॥१३७६॥
शीलं सतत्त्वं संसिद्धिरवस्था तु दशा स्थितिः ।
स्नेहः प्रीतिः प्रेम हार्दं, दाक्षिण्यं त्वनुकूलता ॥१३७७॥
विप्रतिसारोऽनुशयः, पश्चात्तापोऽनुतापश्च ।
अवधानसमाधानप्रणिधानानि तु समाधयः स्युः ॥१३७८

धर्मं पुण्यं वृषं श्रेयं सुकृतं नियतो विधिः ।
दैवं भाग्यं भागधेयं, दिष्टं चायस्तु तच्छुभम् ॥१३७९॥
अलक्ष्मीर्निर्ऋतिः कालकर्णिका स्यादथाशुभम् ।
दुष्कृतं दुरितं पापमेनः पाप्मा च पातकम् ॥१३८०॥
किल्बिषं कलुषं किण्वं, कल्मषं वृजिनं तमः ।
अंहः कल्कमघं पङ्कं, उपाधिर्धर्मचिन्तनम् ॥ १३८१ ॥
त्रिवर्गो धर्मकामार्थाश्चतुर्वर्गः समोक्षकाः ।
बलतुर्याश्चतुर्भद्रं, प्रमादोऽनवधानता ॥१३८२॥
छन्दोऽभिप्राय आकूतं, मतभावाशया अपि ।
हृषीकमक्षं करणं, स्रोतः खं विषयीन्द्रियम् ॥१३८३॥
बुद्धीन्द्रियं स्पर्शनादि, पाण्यादि तु क्रियेन्द्रियम् ।
स्पर्शादयस्त्विन्द्रियार्था, विषया गोचरा अपि ॥१३८४॥
शीतं तुषारं शिशिरं, सुषीमं शीतलो जडः ।
हिमोऽथोष्णं तिग्मतीव्रतीक्ष्णचण्डखराः पटुः ॥१३८५
कोष्णं कवोष्णं कदुष्णं, मन्दोष्णं चापदुष्णवत् ।
निष्ठुरः कक्खटं क्रूरं, परुषं कर्कशं खरम् ॥१३८६॥
दृढं कठोरः कठिनो, मरठः कोमलं पुनः ।
मृदुलं मृदु सोमालं सुकुमारमकर्कशम् ॥१३८७॥

मधुरस्तु रसज्येष्ठो, गुल्यः स्वादुर्मधूलकः ।
अम्लस्तु पाचनो दन्तशठोऽथ लवणः सरः ॥१३८८॥
सर्वरसोऽथ कटुः स्याद्दोषणो मुखशोधनः ।
वक्त्रभेदी तु तिक्तोऽथ, कषायस्तुवरो रसाः ॥१३८९॥
गन्धो जनमनोहारी, सुरभिर्घ्राणतर्पणः ।
समाकर्षी निर्हारी च, स आमोदो विदूरगः ॥१३९०॥
विमर्दोत्थः परिमलोऽथामोदी मुखवासनः ।
इष्टगन्धः सुगन्धिश्च, दुर्गन्धः पूतिगन्धिकः ॥१३९१॥
आमगन्धि तु विस्रं स्याद्वर्णाः श्वेतादिका अमी ।
श्वेतः श्येतः सितः शुक्लो, हरिणो विशदः शुचिः १३९२
अवदातगौरशुभ्रवलक्षधवलार्जुनाः ।
पाण्डुरः पाण्डरः पाण्डुरापत्पाण्डुस्तु धूसरः ॥१३९३॥
कापोतस्तु कपोताभः, पीतस्तु सितरञ्जनः ।
हारिद्रः पीतलो गौरः, पीतनीलः पुनर्हरित् ॥१३९४॥
पालाशो हरितस्तालकाभो रक्तस्तु रोहितः ।
माञ्जिष्ठो लोहितः शोणः, श्वेतरक्तस्तु पाटलः ॥१३९५॥
अरुणो बालसन्ध्याभः, पीतरक्तस्तु पिञ्जरः ।
कपिलः पिङ्गलः श्यावः, पिशङ्गः कपिशो हरिः १३९६

बभ्रुः कद्रुः कडारश्च, पिङ्गः कृष्णस्तु मेचकः ।
स्यादामः श्यामलः श्यामः, कालो नीलोऽसितः शितिः
॥१३९७॥

रक्तश्यामे पुनर्धूम्रधूमलावथ कर्बुरः ।
किर्मीरः एतः शबलश्चित्रः कल्माषचित्रलौ ॥१३९८॥

शब्दो निनादो निर्घोषः स्वानो ध्वानः स्वरो ध्वनिः ।
निर्ह्रादो निनदो ह्रादो, निःस्वानो निःस्वनः स्वनः १३९९
रवो नादः स्वनिर्घोषः, सम्याङ्भ्यो राव आरवः ।
क्वणनं निक्वणः क्वाणो, निक्वाणश्च क्वणो रणः १४००
षड्जर्षभगान्धारा, मध्यमः पञ्चमस्तथा ।
धैवतो निषधः सप्त, तन्त्रीकण्ठोद्भवाः स्वराः ॥१४०१॥

ते मन्द्रमध्यताराः स्युरुरःकण्ठशिरोद्भवाः ।
रुदितं क्रन्दितं क्रुष्टं, तदपुष्टं तु गद्गदं ॥१४०२॥

शब्दो गुणानुरागोत्थः, प्रणादः सीत्कृतं नृणाम् ।
पर्दनं गुदजे शब्दे, कर्दनं कुक्षिसंभवः ॥१४०३॥

क्ष्वेडो तु सिंहनादोऽथ, क्रन्दनं सुभटध्वनिः ।
कोलाहलः कलकलस्तुमुलो व्याकुलो रवः ॥१४०४॥

मर्मरो[1] वस्त्रपर्णादेर्भूषणानां तु शिञ्जितम्[1] ।
हेषा ह्रेषा[1] तुरंगाणां, गजानां गर्जबृंहिते[2] ॥१४०५॥

विस्फारो[1] धनुषां हम्भारम्भे[1] गोर्जलदस्य तु ।
स्तनितं[1] गर्जितं[2] गर्जिः[3], स्वनितं[4] रसितादि च ॥१४०६॥

कूजितं[1] स्याद्विहङ्गानां, तिरश्चां रुतवाशिते ।
वृषस्य रेभणं[1] रेभो[2], बुक्कणं[1] भषणं[2] शुनः ॥१४०७॥

पीडितानां तु क्वणितं[1], मणितं[1] रतिकूजितम् ।
प्रक्वाणः प्रक्वणस्तन्त्र्या, मर्दलस्य तु गुन्दलः ॥१४०८॥

क्षीजनं[1] तु कीचकानां, भेर्या नादस्तु दर्दुरः ।
धीरोऽम्बुभृद्ध्वनिर्मन्द्रो[1], गम्भीरो मधुरः कलः[1] ॥१४०९॥

काकली[1] तु कलः सूक्ष्म, एकतालो[1] लयानुगः ।
काकुर्ध्वनिविकारः स्यात्प्रतिश्रुत्तु[1] प्रतिध्वनिः[2] ॥१४१०॥

सङ्घाते[1] प्रकरौघवारनिकरव्यूहाः समूहश्चयः,
सन्दोहः समुदायराशिविसरव्राताः कलापो[14] व्रजः ।
कूटं[16] मण्डलचक्रवालपटलस्तोमा गणः पेटकं[22],
वृन्दं[23] चक्रकदम्बके समुदयः पुञ्जोत्करौ संहतिः

॥१४११॥

समवायो निकुरम्बं, जालं निवहसञ्चयौ ।
व्रातं तिरश्चां तद्यूथं, सङ्घसार्थौ तु देहिनाम् ॥१४१२॥
कुलं तेषां सजातीनां, निकायस्तु सधर्मिणाम् ।
वर्गस्तु सदृशां स्कन्धो, नरकुञ्जरवाजिनाम् ॥१४१३॥
ग्रामो विषयशब्दाद्यभूतेन्द्रियगणाद् व्रजे ।
समजस्तु पशूनां स्यात्समाजस्त्वन्यदेहिनाम् ॥१४१४॥
शुकादीनां गणे शौकेमायूरतैत्तिरादयः ।
भिक्षादेर्भैक्षसाहस्रगार्भिणयौवतादयः ॥१४१५॥
गोत्रार्थप्रत्ययान्तानां, स्युरौपगवकादयः ।
उक्षादेरौक्षकं मानुष्यकं वार्द्धकमौष्ट्रकम् ॥१४१६॥
स्याद्राजपुत्रकं राजन्यकं राजकमात्मकम् ।
वात्सकौरभ्रकं कावचिकं कवचिनामपि ॥१४१७॥
हास्तिकं ▯ हस्तिनां स्यादापूपिकोऽचेतनाम् ।
धेनूनां धैनुकं धेन्वन्तानां गौधेनुकादयः ॥१४१८॥
कैदारकं कैदारिकं, कैदार्य्यमपि तद्गणे ।
ब्राह्मणानां ब्राह्मण्यं, मैाणव्यं वाडव्यमित्यपि ॥१४१९॥
गणिकानां तु गाणिक्यं, केशानां कैश्यकैशिके ।
अश्वानामाश्वमश्वीयं, पर्शूनां पार्श्वमेव्यप ॥१४२०॥

वातूलं वात्ये वातानां, गव्यागोत्रे पुनर्गवाम् ।
पाश्यागल्यादि पाशादेः, खलादेः खलिनीनिभाः ॥१४२१॥
जनता बन्धुता ग्रामता गजता सहायता ।
जनादीनां रथानां तु, स्याद्रथ्या रथकट्यया ॥१४२२॥
राजिर्लेखा ततिर्वीथी, मालाल्यावलिपङ्क्तयः ।
धोरणी श्रेण्युभौ तु द्वौ, युगलं द्वितयं द्वयम् ॥१४२३॥
युगं द्वैतं यमं द्वन्द्वं, युग्मं यमलयामले ।
पशुभ्यो गोयुगं युग्मे, षट्त्वे तु षड्गवम् ॥१४२४॥
परःशताद्यास्ते येषां, परा सङ्ख्या शतादिकात् ।
प्राज्यं प्रभूतं प्रचुरं, बहुलं बहु पुष्कलम् ॥१४२५॥
भूयिष्ठं पुरुहं भूयो, भूर्यदभ्रं पुरु स्फिरम् ।
स्तोकं क्षुल्लं तुच्छमल्पं, दभ्राणुतलिनानि च ॥१४२६॥
तनु क्षुद्रं कृशं सूक्ष्मं, पुनः श्लक्ष्णं च पेलवम् ।
त्रुटौ मात्रा लवो लेशः, कणो ह्रस्वं पुनर्लघु ॥१४२७॥
अत्यल्पेऽल्पिष्ठमल्पीयं, कनीयोऽणीय इत्यपि ।
दीर्घायते समे तुङ्गमुच्चमुन्नतमुद्धुरम् ॥१४२८॥
प्रांशूच्छ्रितमुदग्रं च, न्यग् नीचं ह्रस्वमन्थरे ।
खर्वं कुब्जं वामनं च, विशालं तु विशङ्कटम् ॥१४२९॥

पृथूरु पृथुलं व्यूढं, विकटं विपुलं बृहत् ।
स्फारं वरिष्ठं विस्तीर्णं, ततं बहु महद् गुरु ॥१४३०॥
दैर्घ्यमायाम आनाह, आरोहस्तु समुच्छ्रयः ।
उत्सेध उदयोच्छ्रायौ, परिणाहो विशालता ॥१४३१॥
प्रपञ्चाभोगविस्तारव्यासाः, शब्दे स विस्तरः ।
समासस्तु समाहारः, संक्षेपः संग्रहोऽपि च ॥१४३२॥
सर्वं समस्तमन्यूनं, समग्रं सकलं समम् ।
विश्वाशेषाखण्डकृत्स्नान्यक्षाणि निखिलाखिले ॥१४३३॥
खण्डेऽर्द्धशकले भित्तं, नेमशकलदलानि च ।
अंशो भागश्च वण्टः स्यात्, पादस्तु स तुरीयकः १४३४
मलिनं कच्चरं म्लानं, कश्मलं च मलीमसम् ।
पवित्रं पावनं पूतं, पुण्यं मेध्यमथोज्ज्वलम् ॥१४३५॥
विमलं विशदं वीध्रमवदातमनाविलम् ।
विशुद्धं शुचि चोक्षं तु, निःशोध्यमनवस्करम् ॥१४३६॥
निर्णिक्तं शोधितं मृष्टं, धौतं क्षालितमित्यपि ।
सम्मुखीनमभिमुखं, पराचीनं पराङ्मुखम् ॥१४३७॥
मुख्यं प्रकृष्टं प्रमुखं प्रवर्हं, वर्यं वरेण्यं प्रवरं पुरोगम् ।
अनुत्तरं प्रागहरं प्रवेकं, प्रधानमग्रेसरमुत्तमाग्र्ये ॥१४३८॥

ग्रामण्यग्र्यग्रिमजात्याग्र्यानुत्तमानन्यनवरार्द्ध्यवरे ।
प्रष्ठपरार्द्धपराणि श्रेयसि
तु श्रेष्ठसत्तमे पुष्कलवत् ॥१४३९॥

स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः ।
सिंहशार्दूलनागाद्यास्तल्लजश्च मतल्लिका ॥१४४०॥

मचर्चिका प्रकाण्डो द्वौ, प्रशस्यार्थप्रकाशकाः ।
गुणोपसर्जनोऽप्राग्र्यप्रधानेऽवमं पुनः ॥१४४१॥

निकृष्टमणकं गर्ह्यमवद्यं काण्डकुत्सिते ।
अपकृष्टं प्रतिकृष्टं, याप्यं रेफोऽवमं ब्रुवम् ॥१४४२॥

खेटं पापमपशदं, कुपूयं चेलमर्वं च ।
तदासेचनकं यस्य, दर्शनाद्दृग् न तृप्यति ॥१४४३॥

चारु हारि रुचिरं मनोहरं,
वल्गु कान्तमभिराममबन्धुरे ।
वामहृद्यसुषमाणि शोभनं,
मञ्जु मञ्जुलमनोरमाणि च ॥१४४४॥

साधुरम्यमनोज्ञानि, पेशलं हृद्यसुन्दरे ।
काम्यं कम्रं कमनीयं, सौम्यं च मधुरं प्रियम् ॥१४४५॥

त्रुटिः कैतवसारं तु, फल्गु शून्यं तु रिक्तकम् ।
शून्यं तुच्छं वशिकं च, निबिडं तु निरन्तरम् ॥१४४६॥

निबिरीसं घनं सान्द्रं, नीरन्ध्रं बहलं दृढम् ।
गाढमविरलं चाथ, विरलं तनु पेलवम् ॥१४४७॥

नवं नवीनं सद्यस्कं, प्रत्यग्रं नूतनूतने ।
नव्यं चाभिनवे जीर्णे, पुरातनं चिरन्तनम् ॥१४४८॥

पुराणं प्रतनं प्रत्नं, जरन्मूर्त्तं तु मूर्तिमत् ।
उच्चावचं नैकभेदमतिरिक्तोऽधिके समे ॥१४४९॥

पार्श्वं समीपं सविधं ससीमा-
भ्याशौ सवेशान्तिकसन्निकर्षाः ।
सदेशमभ्यग्रतनीडसंनि-
धानान्युपान्तं निकटोपकण्ठे ॥१४५०॥

सन्निकृष्टसमर्यादाभ्यर्णान्यासन्नसंनिधी ।
अव्यवहितेऽनन्तरं, संसक्तमपटान्तरम् ॥१४५१॥

नेदिष्ठमन्तिकतमं, विप्रकृष्टपरे पुनः ।
दूरेऽतिदूरे दविष्ठं, दवीयोऽथ सनातनम् ॥१४५२॥

शाश्वतोऽनश्वरो नित्यं, ध्रुवं स्थेयस्त्वतिस्थिरम् ।
स्यास्नु स्थेष्ठं तत्कूटस्थं, कालव्याप्येकरूपः ॥१४५३॥

स्थावरं तु जङ्गमान्यज्जङ्गमं तु त्रसं चरम् ।
चराचरं जगदिङ्गं, चरिष्णु चाथ चञ्चलम् ॥१४५४॥

तरलं कम्पनं कम्प्रं, परिप्लवं चलाचलम् ।
चटुलं चपलं लोलं, चलं पारिप्लवास्थिरे ॥१४५५॥

ऋजावजिह्मप्रगुणौ व्यालोलेऽवनतानते ।
कुञ्चितं नतमाविद्धं, कुटिलं वक्रवेल्लिते ॥१४५६॥

वृजिनं भङ्गुरं भुग्नमरालं जिह्ममूर्मिमत् ।
अंगुरोऽप्युपरोऽन्यस्त्वेकान्येयेके एककः ॥१४५७॥

एकतानोऽनन्यवृत्तिरेकाग्र्यैकाग्र्यं च तद्गतम् ।
अनन्यवृत्त्येकायनगतं चाद्याद्यमादिमम् ॥१४५८॥

पौरस्त्यं प्रथमं पूर्वमादिरग्रमथान्तिमम् ।
जघन्यमन्त्यं चरमन्त्यः पाश्चात्यं पश्चिमे ॥१४५९॥

मध्यमं माध्यमं मध्यमीयं माध्यन्दिनं च तत् ।
अभ्यन्तरमन्तरालं, विचाले मध्यमन्तरे ॥१४६०॥

तुल्यः समानः सदृक्षः, सरूपः सदृशः समः ।
साधारणसधर्माणौ, सवर्णः सन्निभः सदृक् ॥१४६१॥

स्युरुत्तरपदे प्रख्यैः, प्रकारैः प्रतिमो निभैः ।
भूतेरूपोपमाः काशः, सं-नी-प्र-प्रति-तः परः ॥१४६२॥
औपम्यमनुकारोऽनुहारः साम्यं तुलोपमा ।
कक्षोपमानमर्चा तु, प्रतेर्मा यातना निधिः ॥१४६३॥
छाया छंदः कायो रूपं, बिम्बं मानकृती अपि ।
सूर्मी स्थूणाऽयःप्रतिमा, हरिणी स्याद्धिरण्मयी॥१४६४॥
प्रतिकूलन्तु विलोममपसव्यमपष्ठुरम् ।
वामं प्रसव्यं प्रतीपं, प्रतिलोममपष्ठु च ॥१४६५॥
वामं शरीरेऽङ्गं सव्यमपसव्यन्तु दक्षिणम् ।
संबाधोत्कुद्धलोद्दामान्ययमिन्त्रितमनर्गलम् ॥१४६६॥
निरङ्कुशे स्फुटे स्पष्टं, प्रकाशं प्रकटोल्बणे ।
ऋवक्तं वर्तुलं तु वृत्तं, निस्तलं परिमण्डलम् ॥१४६७॥
बन्धुरं तून्नतानतं, स्यपुटं विषमोन्नतम् ।
अन्यदन्यतरद्भिन्नं, त्वमेकमितरच्च तत् ॥१४६८॥
करम्बं कबरो मिश्रः, सम्पृक्तः खचितैः समाः ।
विविधस्तु बहुविधो, नानारूपः पृथग्विधः ॥१४६९॥
त्वरितं सत्वरं तूर्णं, शीघ्रं क्षिप्रं द्रुतं लघु ।
चपलाविलम्बिते च, झम्पा सम्पातपाटवम् ॥१४७०॥

अनारतं त्वविरतं, संसक्तं सततानिशे ।
नित्यानवरताजस्रसेकाश्रान्तानि सन्ततम् ॥१४७१॥

साधारणं तु सामान्यं, दृढसन्धि तु संहतम् ।
कलिलं गहनं सङ्कीर्णं तु सङ्कुलमाकुलम् ॥१४७२॥

कीर्णमाकीर्णं च पूर्णं, त्वाचितं छन्नपूरिते ।
भरितं निचितं व्याप्तं, प्रत्याख्याते निराकृतम् ॥१४७३॥

प्रत्यादिष्टं प्रतिक्षिप्तमपविद्धं निरस्तवत् ।
परिक्षिप्ते वलयितं, निवृत्तं परिवेष्टितम् ॥१४७४॥

परिष्कृतं परीतं च, त्यक्तं तूत्सृष्टमुज्झितम् ।
धूतं हीनं विधूतं च, विन्नं वित्तं विचारिते ॥१४७५॥

अवकीर्णं ध्वस्तवस्ते, संवीतं रुद्धमावृतम् ।
संवृतं पिहितं छन्नं, स्थगितं चापवारितम् ॥१४७६॥

अन्तर्हितं तिरोहितमन्तर्द्धिस्त्वपवारणम् ।
छदनंत्वपधाऽन्तर्द्धापिधानस्थगनानि च ॥१४७७॥

व्यवधानं तिरोधानं, दर्शितं तु प्रकाशितम् ।
आविष्कृतं प्रकटितमुच्चण्डं स्पष्टमुल्बणम् ॥१४७८॥

अनादृतमवज्ञातं, मानितं गणितं मतम् ।
रीढोऽवज्ञोऽवहेलोऽन्यसूक्षणं चाप्यनादरे ॥१४७९॥
उन्मूलितमावर्हितं, स्यादुत्पाटितमुद्धृतम् ।
प्रेङ्खोलितं तरलितं, लुलितं प्रेङ्खितं धुतम् ॥१४८०॥
चलितं कम्पितं धूतं, वेल्लितान्दोलिते अपि ।
दोला प्रेङ्खोलनं प्रेङ्खा, काण्डं कुत्समयत्नतः ॥१४८१॥
अथ.क्षिप्तं न्यञ्चितं स्यादूर्ध्वक्षिप्तमुदञ्चितम् ।
नुन्ननुत्तास्तनिष्ठ्यूतान्याविद्धं क्षिप्तमीरितम् ॥१४८२॥
समे दिग्धेलिप्ते रुग्णेभुग्ने रूषितेगुण्ठिते ।
गूढेगुप्ते च मुषितमूषिते गुणिताहते ॥१४८३॥
स्यान्निशानं शितं शातं, निशितं तेजितं क्ष्णुतम् ।
वृत्ते तु वृत्तवावृत्तौ, ह्रीतह्रीणौ तु लज्जिते ॥१४८४॥
सङ्कुलैः स्यात्सङ्कुलिते, सयोजिते उपाहिते ।
पक्के परिणतं पाके, क्षीराज्यहविषां शृतम् ॥१४८५॥
निष्पक्वं क्वथिते प्लुष्टे प्रुष्टदग्धोषिताः समाः ।
समूहतं स्वहेतयौ, विद्धे छिद्रितवेधितौ ॥१४८६॥

सिद्धे निर्वृत्तनिष्पन्नौ, विलीने द्रुतविद्रुतौ ।
उतं प्रोतं स्यूतमूतमुतं च तन्तुसन्तते ॥१४८७॥
पाटितं दारितं भिन्ने, विदरः स्फुटनं भिदा ।
अङ्गीकृतं प्रतिज्ञातमूरीकृतोररीकृते ॥१४८८॥
संश्रुतमभ्युपगतमुररीकृतमाश्रुतम् ।
सङ्कीर्णं प्रतिश्रुतं च, छिन्ने लूनं छितं दितम् ॥१४८९॥
छेदितं खण्डितं वृक्णं, कृत्तं प्राप्तं तु भावितम् ।
लब्धमासादितं भूतं, पतिते गलितं च्युतम् ॥१४९०॥
स्रस्तं भ्रष्टं स्कन्नपन्ने, संशितं तु सुनिश्चितम् ।
मृगितं मार्गितान्विष्टान्वेषितानि गवेषिते ॥१४९१॥
तिमितं स्तिमितक्लिन्नसार्द्रार्द्रोत्ताः समुन्दवत् ।
प्रस्थापितं प्रतिशिष्टं, प्रहितप्रेषिते अपि ॥१४९२॥
ख्याते प्रतीतप्रज्ञातवित्तप्रथितविश्रुताः ।
तप्ते सन्तापितौ दूनो, धूपायितश्च धूपितः ॥१४९३॥
शीनं स्त्यानमुपपन्नस्तूपसन्ने उपस्थितः ।
निर्यातश्च गते याते, निर्णीः पात्रकादिषु ॥१४९४॥

प्रवृद्धमेधितं प्रौढं, विस्मृतान्तर्गते समे ।
उद्वान्तमुद्गते गूनं, हन्ने मीढं तु मूत्रिते ॥१४९५॥
विदितं बुधितं बुद्धं, ज्ञातं सितंगतं अवात् ।
मुनितं प्रतिपन्नं च, स्यन्ने रीणं स्नुतं श्रुतम् ॥१४९६॥
गुप्तगोपायितत्रातावितत्राणानि रक्षिते ।
कर्म क्रिया विधौ हेतुशून्या त्वास्या विलक्षणम्॥१४९७
कार्मणं मूलकर्माथ, सम्वननं वशक्रिया ।
प्रतिबन्धे प्रतिष्टम्भः, स्यादास्थाऽस्थाऽपना स्थितिः ॥
परस्परं स्यादन्योऽन्यमितरेतरमित्यपि ।
आवेशाटोपौ संरम्भे, निवेशो रचना स्थितौ ॥१४९९॥
निर्बन्धोऽभिनिवेशः स्यात्प्रवेशोऽन्तर्विगाहनम् ।
गतौ वीह्ना विहारेर्यापरिसर्पपरिक्रमाः ॥१५००॥
व्रज्याऽटाट्या पर्यटनं, चर्या त्वीर्यापथस्थितिः ।
व्यत्यासस्तु विपर्यासो, वैपरीत्यं विपर्ययः ॥१५०१॥
व्यत्ययेऽप स्फातिर्वृद्धौ, प्रीणनेऽवनतर्पणे ।
परित्राणं तु पर्यासिर्हस्तधारणमित्यपि ॥१५०२॥
प्रणतिः प्रणिपातोऽनुनयेऽप शयने क्रमात् ।
विशाये उपशायश्च, पर्यायोऽनुक्रमः क्रमः ॥१५०३॥

परिपाट्यानुपूर्व्यावृदतिपातस्त्वतिक्रमः ।
उपात्ययः पर्ययश्च, समौ सम्बाधसङ्कटौ ॥१५०४॥

कामं प्रकामं पर्याप्तं, निकामेष्टे यथेप्सितम् ।
अत्यर्थं गाढमुद्गाढं, बाढं तीव्रं भृशं दृढम् ॥१५०५॥

अतिमात्रातिमर्यादनितान्तोत्कर्षनिर्भराः ।
भरैकान्तातिवेलातिशया जृम्भो तु जृम्भणम् ॥१५०६॥

आलिङ्गनं परिष्वङ्गः, संश्लेष उपगूहनम् ।
अङ्कपाली परीरम्भः, क्रोडीकृतिरथोत्सवे ॥१५०७॥

महः क्षणोद्धवोद्धर्षा, मेलके सङ्गसङ्गमौ ।
अनुग्रहोऽभ्युपपत्तिः, समौ निरोधनिग्रहौ ॥१५०८॥

विघ्नोऽन्तरायप्रत्यूहव्यवायाः समयः क्षणः ।
वेलावारावसराः, प्रस्तावः प्रक्रमोऽन्तरम् ॥१५०९॥

अभ्यादानमुपोद्घात, आरम्भः प्रोपतः क्रमः ।
प्रत्युत्क्रमः प्रयोगः स्यादारोहणं त्वधिक्रमः ॥१५१०॥

आक्रमोऽधिक्रियाक्रान्ती, व्युत्क्रमस्तूत्क्रमोऽक्रमः ।
विप्रलम्भो विप्रयोगो, वियोगो विरहः समाः ॥१५११॥

आभा राढा विभूषा श्रीरभिख्या कान्तिविभ्रमाः ।
लक्ष्मी च्छाया च शोभायां, सुषमा साऽतिशायिनी १५१२
संस्तवः स्यात्परिचये, आकारस्त्विङ्ग इङ्गितम् ।
निमित्ते कारणं हेतुर्बीजं योनिर्निबन्धनम् ॥१५१३॥
निदानमथ कार्यं स्यादर्थः कृत्यं प्रयोजनम् ।
निष्ठानिर्वहणे तुल्ये, प्रवहो गमनं बहिः ॥१५१४॥
जातिः सामान्यं व्यक्तिस्तु, विशेषः पृथगात्मिका ।
तिर्यक् साचिः संहर्षस्तु, स्पर्द्धा द्रोहस्त्वपक्रिया १५१५
वन्ध्यो मोघाफलमुधा, अनर्थकं तु निरर्थकम् ।
संस्थानं सन्निवेशः स्यादर्थस्यापगमे व्ययः ॥१५१६॥
सम्मूर्छनं त्वभिव्याप्तिर्भ्रेशो भ्रंशो यथोचितात् ।
अगावो नाशो संक्रामसंक्रमौ दुर्गसञ्चरे ॥१५१७॥
नीवाकस्तु प्रयामः स्यादवेक्षा प्रतिजागरः ।
समौ विश्रम्भविश्वासौ, परिणामस्तु विक्रिया ॥१५१८॥
चक्रावर्तो भ्रमो भ्रान्तिर्भ्रमिर्घूर्णिश्च घूर्णनं ।
विप्रलम्भो विसंवादो, विलम्भस्त्वतिसर्जनम् ॥१५१९॥
उपलम्भस्त्वनुभवः, प्रतिलम्भस्तु लम्भनम् ।
नियोगे विधिसंप्रैषौ, विनियोगोऽर्पणं फले ॥१५२०॥

लवोऽभिलावो लवनं, निष्पावः पवनं पवः ।
निष्ठेवष्ठीवनष्ठ्यूतष्ठेवनानि तु थूत्कृते ॥१५२१॥

निवृत्तिः स्यादुपरमो, व्यवोपोऽङ्ग्यः परा रतिः ।
विधूननं विधुवनं, रिङ्खणं स्खलनं समे ॥१५२२॥

रक्षणत्राणे ग्रहो ग्राहे, व्यधो वेधे क्षये क्षियो ।
स्फरणं स्फुरणे ज्यानिर्जीर्णावथ वरो वृतौ ॥१५२३॥

समुच्चयः समाहारोऽपहारोपचयौ समौ ।
प्रत्याहार उपादानं, बुद्धिशक्तिस्तु निष्क्रमः ॥१५२४॥

इत्यादयः क्रियाशब्दा, लक्ष्या धातुषु लक्षणम् ।
अथाव्ययानि वक्ष्यन्ते, स्वः स्वर्गे भू रसातले ॥१५२५॥

भुवो विहायसो व्योम्नि, द्यावाभूम्योस्तु रोदसी ।
उपरिष्टादुपर्यूर्द्ध्वं, स्यादधस्तादधोऽप्यवाक् ॥१५२६॥

वर्जने त्वन्तरेणर्ते, हिरुग् नाना पृथग् विना ।
साकं सत्रा समं सार्द्धममा सह कृतं त्वलम् ॥१५२७॥

मनैरस्तु च किंतुल्याः, प्रेत्यामुत्र भवान्तरे ।
तूष्णीं तूष्णीकां जोषं च, मौनं दिष्ट्या तु सम्मदे ॥
॥१५२८॥

परितः सर्वतो विष्वक्, समन्ताच्च समन्ततः ।
पुरः पुरस्तात्पुरतोऽग्रतः प्रायस्तु भूमनि ॥१५२९॥
साम्प्रतमधुनेदानीं, सम्प्रत्येतर्ह्यथाञ्जसा ।
द्राक् स्रागरं झटित्याशु,मङ्क्ष्वह्नाय च सत्वरम् ॥१५३०॥
सदा सनाऽनिशं शश्वद्, भूयोऽभीक्ष्णं पुनःपुनः ।
असकृन्मुहुः सायं तु, दिनान्ते दिवसे दिवा ॥१५३१॥
सहसैकपदे सद्योऽकस्मात् सपदि तत्क्षणे ।
चिराय चिररात्राय, चिरस्य च चिराच्चिरम् ॥१५३२॥
चिरेण दीर्घकालार्थे, कदाचिज्जातु कर्हिचित् ।
दोषा नक्तमुषा रात्रौ, प्रगे प्रातरहर्मुखे ॥१५३३॥
तिर्य्यगर्थे तिरः साचि, निष्फले तु वृथा मुधा ।
मृषा मिथ्याऽनृतेऽभ्यर्णे, समया निकषा हिरुक् ॥१५३४॥
शं सुखे बलवत्सुष्ठु, किमुताऽतीव निर्भरे ।
प्राक् पुरा प्रथमे वर्षे, संवत् परस्परे मिथः ॥१५३५॥
उषा निशान्तेऽल्पे किञ्चिन्मनागीषच्च किञ्चन ।
आहो उताहो किमुत, वितर्के किं किमुत च ॥१५३६॥
इतिह स्यात्संप्रदाये, हेतौ यत्तद्यतस्ततः ।
सम्बोधनेऽङ्ग भोः प्याट् पाट्, हे है हंहो अरेऽयि रे ॥
॥१५३७॥

श्रौषट् वौषट् वषट्[3] स्वाहा, स्वधा देवहविर्हुतौ ।
रहस्युपांशु मध्येऽन्तरन्तरेणान्तरेऽन्तरा ॥१९३८॥

प्रादुराविः प्रकाशे स्यादभावे त्वै न नो[3] नहि[4] ।
हठः प्रसह्ये मा माऽस्मे, वारणेऽप्तैमदर्शने ॥१९३९॥

अकामानुमतौ कामं, स्यादों[1] ओं[2] परमं[3] मते ।
कच्चिदिष्टपरिप्रश्नेऽवश्यं[1] नूनं[2] च निश्चये ॥१९४०॥

बहिर्बहिर्भवे ह्यः स्यादतीतेऽह्नि श्वः एष्यति ।
नीचैरल्पे महत्युच्चैः[1], सत्वेऽस्ति दुष्ठु निन्दने ॥१९४१॥

ननु च स्याद्विरोधोक्तौ, पक्षान्तरे तु चेद्यदि[2] ।
शनैर्मन्देऽश्रे त्वर्वाक्के, शेषोक्तावु[1]नतौ नमः ॥१९४२॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामभिधानचिन्तामणौ
नाममालायां सामान्यकाण्डः
षष्ठः समाप्तः ॥ ६ ॥

---

आचार्यवर्यश्रीहेमचन्द्रविरचिता ।

# शेषनाममाला ॥

प्रणिपत्यार्हतः सिद्धसांगशब्दानुशासनः ।
शेषाख्यनाममालायां, नामानि प्रतनोम्यहम् ॥१५४३॥

निर्वाणे स्यात् शीतीभावः शांतिर्नैश्चिन्त्यमंतिकः ।
शिष्ये छात्रो भद्रे भव्यं, काम्यं सुकृतसूनृते ॥१५४४॥

फलोदयो मेरुपृष्ठं, वासवावासतैरिकौ ।
द्विदिवोर्ध्वदिविष्ठश्च, दिव्यं च स्वर्गवाचकाः ॥१५४५॥

निलिंपाः कामरूपाश्च, साध्याः शोभोश्चिरायुषः ।
पूर्मिता मर्त्यमहिताः, सुवार्ता वायुभोः सुराः ॥१५४६॥

द्वादशार्का वसवोऽष्टौ, विश्वे देवास्त्रयोदश ।
षट्त्रिंशत्तुषिताश्चैव, षष्टिराभास्वरा अपि ॥१५४७॥

षट्त्रिंशदधिके माहाराजिकाश्च शते उभे ।
रुद्रा एकादशैकोनपंचाशद्वायवोऽपरे ॥१५४८॥

चतुर्दश तु वैकुंठाः, सुशर्माणः पुनर्दश ।
साध्याश्च द्वादशेत्याद्या, विज्ञेया गणदेवताः ॥१५४९॥

सूर्ये वैराजी लोकबंधुर्मनेमिर्मानुकेशरः ।
सहस्रांको दिवापृष्टः, कालभृद्रात्रिनाशनः ॥११९०॥
वेधीः सदागतिः पीतुः, सांवत्सररथः कपिः ।
हर्शानः पुष्करो ब्रह्मा, बहुरूपश्च कर्णसुः ॥११९१॥
वेदोदयः खतिलकः, प्रत्यूषांड सुरावृतः ।
लोकप्रकाशनः पीथो, जगद्दीपोऽद्भुतस्वरः ॥११९२॥
अरुणे विपुलस्कंधो, महासारथिराश्मनः ।
चंद्रस्तु मास्तपोराजौ, शुभांशुः श्वेतवाहनः ॥११९३॥
जैर्णः सृप्रो राजराजो, यज्वतः कृत्तिकाभवः ।
यक्षेराडौषधीगर्भः, तपसः शयतो बुधः ॥११९४॥
स्पन्दः खसिंधुः सिधूत्थः, अविष्ठारमणस्तथा ।
आकाशचमसः पीतुः, क्लेदुः पर्वरिचिच्छिदौ ॥११९५॥
परिज्वा भुवनो नेमिश्चंदिरः खेदुरेकभूः ।
भौमे व्योमोरमुककोंगौ, गीष्पतिस्तु महामतिः ॥११९६॥
प्रस्थेयाः प्रचैक्षा वाग्मू वाग्मी, गौरो दीदिविगीरथौ ।
शुक्रे भृगुः रानौ वंगुः, श्रुतकर्मा महाप्रिरः ॥११९७॥
शनैश्चरोऽशुभः कालो, ब्रह्मण्यश्च यमः स्थिरः ।
क्रूरात्मा पाप राहौ स्यादुपराग उपप्लवः ॥११९८॥

केतावूर्ध्वकचो ज्योतीरथमहाश्रयौ ध्रुवे ।
अगस्त्ये विन्ध्यकूटः स्याद्,दक्षिणाशारतिर्मुनिः[१]॥१९५९॥
सर्वाग्निवाहिणिः कौथिस्तपनः कलशीसुतः ।
व्युष्टे निशात्ययगोसगौं निशि चक्रभेदिनी ॥१९६०॥
निषद्वरी निशीथ्या निड्, घोरा वासरकन्यका ।
शर्वाक्षी राक्षसी याम्या, पूतांचिस्तामसी तमिः[११]१९६१
शौर्वरी क्षैणिनी नक्तं[१५], पैशाची वासुरा उशीः ।
दिनात्ययः प्रदोषे स्याद्, ध्वांते वृत्रोरजोबलम्॥१९६२॥
रात्रिरागो नीलपंको, दिनांडं दिनकेसरः ।
खपरागो निशावर्म, वियद्भूतिर्दिगंबरः ॥१९६३॥
पक्षः कृष्णः सितो द्वेधा, कृष्णो निशाह्वयोऽपरः ।
शुक्लो दिनाह्वयः पूर्वो, मासे वर्षांशको भवेत् ॥१९६४॥
वर्षकोशो दिनमलः, फाल्गुनीलस्तु फाल्गुने ।
चैत्रे मोहनिकः कामभंजश्च फाल्गुनानुजः ॥१९६५॥
वैशाखे नूतसरो ज्येष्ठमासे तु खरकोमलः ।
ज्येष्ठामूलीय इतिच, कार्त्तिके सैरिकौमुदौ ॥१९६६॥
हिमागमस्तु हेमंते, वसंते पिकबांधवः ।
पुष्पसाधारणश्चापि, ग्रीष्मे तूष्मायणो मतः ॥१९६७॥

आखोरपद्यौ वर्षे तु, ऋतुवृत्तिर्युगांशकः ।
कालग्रन्थिर्मासमलः, संवत्सर्वर्त्तुशारदौ ॥१९६८॥

वत्सइद्वत्सर इडावत्सरः परवाणिवत्स् ।
नक्षत्रवर्त्मनि पुनर्ग्रहनेमिर्नभोवीटी ॥१९६९॥

छायापथश्च मेघे तु, व्योमधूमो नभोद्रुमः ।
गडयित्नुर्गदयित्नुर्वर्मिसिर्वारिवाहनः ॥१९७०॥

खतमालोऽप्यथासारे, धारासंपात इत्यपि ।
करकेऽम्बुघनो मेघकफो मेघास्थिमिञ्जिका ॥१९७१॥

बीजोदकं तोयडिम्भो, वर्षाबीजमिरांबरम् ।
यथा परेतरा पूर्वा, परा पूर्वेतरा तथा ॥१९७२॥

यथोत्तरेतराऽपाची, तथाऽपाचीतरोत्तरा ।
इंद्रे तु खेदिरो नेरी*, त्रायस्त्रिंशपतिर्मये. ॥१९७३॥

गौरावस्कन्दी वन्दीको, घर्माणो देवदुन्दुभिः ।
क्षिणालोतश्च हरिमान्, यामनेमिरसन्महौः ॥१९७४॥

शैवीविर्मिहिरो** वज्रदक्षिणो वयुनोऽपि च ।
स्यात्पौलोम्यां तु शक्राणी, माहेश्वरा शतावरी॥१९७५॥

महेन्द्राणी परिपूर्णसहस्रचन्द्रेत्यपि ।
जयंते पागमनानो, वृषेणाश्वो हरेर्हये. ॥१९७६॥

मातलौ हयंकषः स्यादैरावणे मदांबरः ।
सदादानो भद्ररेणुः, पुरे त्वैंद्रे सुदर्शनम् ॥१९७७॥
नासिक्ययोस्तु नासत्यदस्रौ प्रवरवाहनौ ।
गदांतकौ यज्ञवहौ, यमे तु यमुनाग्रजः ॥१९७८॥
महासत्यः पुराणांतः, कालकूटोऽथ राक्षसे ।
पलप्रियः खसापुत्रः, कर्बुरो नरविष्वणः ॥१९७९॥
आशिरो हलुपः शंकुर्विधुरो मलोहितः ।
उद्धारः स्तब्धसंभीरो, रक्तग्रीवः प्रवीहिकः ॥१९८०॥
संध्याबलो रात्रिबलस्त्रिशिरीः समितीपेंद्रः ।
वरुणे तु प्रतीचीशो, दुंदुभ्युद्दामसंवृताः ॥१९८१॥
धनदे निधनीक्षः स्यान्महासत्त्वः प्रमोदितः ।
रत्नगर्भ उत्तराशाधिपतिः सत्यसंगरः ॥१९८२॥
धनकेलिः सुप्रसन्नः, परिविद्धोऽलका पुनः ।
वसुप्रभा वसुसारा, शंकरे नंदिवर्द्धनः ॥१९८३॥
बहुरूपः सुप्रसादो, मिहिराणोऽपराजितः ।
कंकटीको गुह्यगुरुर्मगनेत्रांतकः स्वरुः ॥१९८४॥
परिणाहो दशबाहुः, सुभगोऽनेकलोचनः ।
गोपालो वरवृद्धोऽहिर्पर्यकः पांसुचंदनः ॥१९८५॥

कूटकृन्मंदरमणिर्नवशक्तिर्महांबुकः ।
कोणवादी शैलधन्वा, विशालाक्षोऽक्षतस्वनः ॥१९८६॥
उन्मत्तवेषः शर्वरीः, सितांगो धर्म्मवाहनः ।
महाकांतो वह्निनेत्रः, स्त्रीदेहार्द्धो नृवेष्टनः । ॥१९८७॥
महानादो नराधीशो, भूरिरेकादशोत्तमः ।
जोटी जोटीगोऽर्द्धकूटः, समिरो धूम्रयोगिनौ ॥१९८८॥
उलंदो यनीतः कौलो, जटाधरदर्शाव्ययौ ।
संध्यानाटी रेरिहाणः, शंकुधी कपिलांजनः ॥१९८९॥
जगद्योनिरर्द्धकालो, दिशांप्रियतमोऽनलः
जगत्स्रष्टा कटोटंकः, कटप्रोहीहिस्कांगैः ॥१९९०॥
गौतमी कौशिकी कृष्णा, तामसी बाभ्रवी अंबा ।
कात्यायनिर्मर्दमाया, भ्रामरी यादवी वरी ॥१९९१॥
बर्हिध्वजा शूलधरा, परमब्रह्मचारिणी ।
अमोघा विंध्यनिलया, षष्ठी कांतारवासिनी ॥१९९२॥
जांगुली बैदरी बासी, वरदा कृष्णपिंगला ।
दृषद्वनाद्रिभेगिनी, प्रगल्भा रेवती तथा ॥१९९३॥
महाविद्या सिनीवाली, रक्तदंत्यैकपाटला ।
एकपर्णा बहुभुजा, नंदपुत्री महामेधा ॥१९९४॥

भद्रकाली महाकाली, योगिनी गणनायिका।
हासा मीमा प्रकृष्माण्डी, गदिनी वारुणी हिमा १५९५
अनंता विजया क्षेमा, मानस्तोका कुहावती।
चारणी च पितृगणा, स्कंदमाता घनाञ्जनी ॥१५९६॥
गांधर्वी स्वधुरा गार्गी, सावित्री ब्रह्मचारिणी।
कोटिश्रीमंदरावासा, केशी मलयवासिनी ॥१५९७॥
कालायिनी विशालाक्षी, किराती गोकुलोद्भवा।
एकानसी नारायणी, शैला शाकंभरीश्वरी ॥१५९८॥
प्रकीर्णकेशी कुंडा च, नीलवस्त्रा प्रपंचधारिणी।
अष्टादशभुजा पौत्री, शिवदूती यमस्वसा ॥१५९९॥
सुनंदा विकचा ऊर्मी, जयंती नकुला कुला।
विलंका नंदिनी नंदा, नंदयती निरंजनी ॥१६००॥
कौलंजरी शतमुखी, विकराला करालिका।
विरजाः पुरला जारी, बहुपुत्री कुलेश्वरी ॥१६०१॥
कैटभी कालदमनी, दर्दुरा कुलदेवता।
रौद्रा क्रुद्रा महारौद्री, कालगर्भा महानिशा ॥१६०२॥
बलदेवस्वसा पुत्री, हीरी क्षेमंकरी प्रभा।
मारी हैमवती चापि, गोला शिखरवासिनी ॥१६०३॥

चामुंडायां महाचंडी, चंडमुंडाऽप्यथाऽच्युते ।
पृश्निगर्भः पृश्निशृंगो, द्विशरीरस्त्रिधातुकः ॥१६०४॥
हस्तिमल्लो विषाणान्तः, स्कंदे तु करवीरकः ।
सिद्धसेनो वैजयंतो, बालचर्यो दिगंबरः ॥१६०५॥
शृंगी तु चर्मी ब्रह्मा तु, क्षेत्रज्ञः पुरुषः सनत् ।
नारायणे तीर्थपादः, पुण्यश्लोको बलिंदमः ॥१६०६॥
उरुक्रमोरुगायौ च, तमोघ्नः श्रवणोऽपि वा ।
उदारधिर्लसोपर्णः, सुमेदः पांशुमौलिकः ॥१६०७॥
चतुर्व्यूहो नवव्यूहो, नवशक्तिः षडंगजित् ।
द्वादशमूर्तिः शतको, दशावतार एकहेकृ ॥१६०८॥
हिरण्यकेशः सोमोऽहिस्त्रिधामा त्रिककुत् त्रिपात् ।
मानमेरुः पराविद्धः, प्रश्निगर्भोऽपरोमितः ॥१६०९॥
हिरण्यनाभः श्रीगर्भो, वृषोत्सोहः सहस्रजित् ।
ऊर्ध्वकर्मा यज्ञवेरो, धर्मनेमिरसंयुतः ॥१६१०॥
पुंरूपो योगनिद्रोष्ठः, लंडास्यः शार्ङ्गिकोऽजितौ ।
कालकुंठो वरारोहः, श्रीरंगे वायुवाहनः ॥१६११॥
वर्धमानश्चतुर्दंष्ट्रो, नृसिंहवेषप्रव्यंगः ।
कपिठो मद्रकपिठः, सुषेणः समितिंजयः ॥१६१२॥

ऋतुधामा वास्तुभद्रो, महारूपो महाक्रमः ।
विधाताऽऽधार एकांगो, वृषाक्षः सुवृषोऽर्जुनः ॥१६१३॥
रंतिदेवः सिंधुवृषो, जितमन्युर्वृकोदरः ।
बहुशृंगो रत्नबाहुः, पुष्पहासो महातपाः ॥१६१४॥
लोकनाभः सूक्ष्मनाभो, धर्मनाभः पराक्रमः ।
पद्महासो महाहंसः, पद्मगर्भः पुरोत्तमः ॥१६१५॥
शतवीरो महामायो, ब्रह्मनाभः सरीसृपः ।
धृतांकोऽधोमुखो धन्वी, सुधन्वा विश्वभुक् स्थिरः ॥१६१६
शतानंदः शाल्यापि, यवनारिः प्रेमर्दनः ।
यज्ञनेमिर्लोहिताक्ष, एकपाद्विपदः कपिः ॥१६१७॥
एकशृंगो धर्मकील, आनंदः शिवकीर्त्तनः ।
शंभुवशीः श्रीवराहः, सदायोगी सुयोधुनः ॥१६१८॥
बलभद्रे तु मद्रांगः, फालो गुप्तचरो बली ।
प्रलापी मद्रचलनः, पौरः शेषाहिनामभृत् ॥१६१९॥
लक्ष्म्यां तु भर्मरी विष्णुशक्तिः क्षीराब्धिपाजुपी ।
कामे तु यौवनोद्भेदः, शिखिमृत्युर्महोत्सवः ॥१६२०॥
शमांतकः सर्वधन्वी, रागरज्जुः प्रधर्षकः ।
मनोदाही मथनश्च, गरुडस्तु विषापहः । ॥१६२१॥

पक्षिसिंहो महापक्षो, महावेगो विशालकः ।
उन्नतीशः स्वमुखभूः, शिलानीहोऽहिभुक्क सः ॥१६२२॥

बुद्धे तु भगवान् योगी, बुधो विज्ञानदेशनः ।
महासत्त्वो लोकनाथो, बोधिरर्हन् सुनिश्चितः ॥१६२३॥

गुणाब्धिर्विगतद्वंद्वो, वचने स्यात्तु जल्पितम् ।
लपितोदितभणिताभिधानगदितान्यपि ॥१६२४॥

हूतौ हेक्कारकाऽऽकारौ, चांडालानां तु वल्लकी ।
कांडवीणा कुवीणा च, ढक्कारी किंनरी तथा ॥१६२५॥

सारिका खुंखुणी चाथ, दर्दरे कलशीमुखः ।
सूर्यकोणो डमड्डकं, समौ पणवकिंजलौ ॥१६२६॥

शृंगवाद्ये शृंगमुखं, हुडुक्कस्तालमर्दकः ।
काहला तु कुहाला स्यात्, चंडकोलाहला च सा १६२७॥

संवेशप्रतिबोधार्थं, द्रगडद्रकटावुभौ ।
देवतार्चनतूर्ये तु, घूघलो नेलिरित्यपि ॥१६२८॥

झुणकं मृतयात्रायां, मांगल्ये प्रियवादिका ।
रणोद्यमे त्वर्धतूरो, वाद्यभेदास्तथाऽपरे ॥१६२९॥

डिंडिमो झंझरो मड्डुनिमिटा किरिकिंचिका ।
लंबिका टट्टरी घंटा, कल्लापूराद्योऽपि च ॥१६३०॥

मयंकरे तु डमरमोपीलं मौसुरं तथा ।
आश्चर्ये फुल्लकं मोहो, वीक्ष्यं ओतस्तु दग्नले ॥११३१॥
निद्रायां तामसी सुते, सुव्वापः सुखसुप्तिका ।
आकारगूहने चावकेटिकाऽवकुंटारिका ॥११३२॥
गृहजालिकाऽपि सूत्रधारे स्याद्वीनदर्शकः ।
पूज्ये मरटेको भट्टः, मयोऽन्यः पूज्यनामतः ॥११३३॥

इति द्वितीयकांडशेषः ॥ २ ॥

## ॥ अथ तृतीयकांडशेषः प्रारभ्यते ॥

अथ प्रवीणे क्षेत्रज्ञो, नदीष्णो निष्ण इत्यपि ।
छेकोलछेकिलौ छेके, काहलोऽस्फुटभाषिणि ॥११३४॥
मूके मडकंटो मूर्खे, त्वेनेडो नामवर्जितः ।
परतंत्रे वैशाऽऽयत्तावपीनोऽप्यप दृश्यते ॥११३५॥
क्षुद्रो दीनश्च नीचश्च, मादिस्तु गणिकाभूतौ ।
प्रस्तुप्रस्तौ तु घक्तितेऽप क्षुद्रेपलंटौ खले ॥११३६॥
चौरे तु चोरंटो रात्रिंचरो याच्ञा तु मिलेगा ।
अभिधेस्तिमार्गणौ च, बुभुक्षायां क्षुधाक्षुधौ ॥११३७॥

मस्कमंडे तु प्रस्रावप्रस्रेवाऽऽच्छोटनाऽऽस्रावाः ।
अपूपे पारिशोलोऽथ, करंबो दधिसक्तुषु ॥११३८॥
ईडेरिका तु वटिका, शष्कुली त्वघैलोटिका ।
पर्पटास्तु मर्मराला, घृतांडी तु घृतौषणी ॥११३९॥
समिताखंडाज्यकृतो, मोदको लड्डुकश्च सः ।
एलामरिचादियुतः, स पुनः सिंहकेसरः ॥११४०॥
लानेषु मरेनोद्भूपलटिकापरिवारकाः ।
दुग्धे योग्यं माल्सात्म्यं, जीवनीयं रसोत्तमम् ॥११४१॥
सरं गव्यं मधुन्येष्ठं, धारोष्णं तु पयोऽमृतम् ।
दधि 'श्रीधेनमंगल्ये, तक्रे कट्वरसारणे ॥११४२॥
अशोघ्नः परमरसः, कुल्माषाभिषुते पुनः ।
गृहांबुमधुरा चाप, स्यात् कुस्तुंबुरुस्तुका ॥११४३॥
मरिचे तु द्वारवृत्तं, मरिचं चरितं तथा ।
पिप्पल्यामूषणा शौंडी', चपैला तीक्ष्णतण्डुला ॥११४४॥
उपौणा तण्डुलफला, कोलौ च कृष्णतण्डुला ।
मीरे मीरणमार्गौ, हिंगौ तु मृतनाशनम् ॥११४५॥
अगूढगंधमस्त्रुधं, हिप्सौ छाक्षसर्फौ ।
छोदो' हिप्सा तु चनोधा, हेमिरीदसा च कार्यना ११४६

पूजा स्वपैचितिरथ, चिंपिटो नम्रनासिके ।
पंगुलस्तु पीठसर्पी, किरातस्त्वल्पवर्ष्मणि ॥१६४७॥

खर्वे ह्रस्वोऽनेडमूकस्त्वंधे न्युब्जस्त्वधोमुखे ।
पित्ते पलोग्निः पटलं ज्वरः स्यादग्निरेचकः ॥१६४८॥

कफे शिङ्घानकः खेटः, स्यात् कुकुदे तु कूपेदः ।
पारिमितोऽथ कायस्थः, करणोऽक्षरजीविनि ॥१६४९॥

क्षमे समर्थोऽलंभूष्णुः, पादातपदगौ समौ ।
जांबूलमालिकोद्वाहे, वरयात्रा तु दौंदुभी ॥१६५०॥

गोपाली वर्णके शांतियात्रा वरनिमंत्रणे ।
स्यादिंद्राणीमहे हेलिहलुर्मंगलध्वनिः ॥१६५१॥

स्यात्तु स्वस्त्ययनं पूर्णे, कलशे मंगलोह्लिकम् ।
शांतिके मंगलस्नानं, वारि पल्लववारिणा ॥१६५२॥

हस्तलेपे तु करणं, हस्तबंधे तु पीडनम् ।
तच्छेदे समवभ्रंशो, धूलिभक्ते तु वार्तिकम् ॥१६५३॥

कुलटायां तु दुःशृंगी, बन्धुदा कलंकुणिका ।
धर्षणी लंछनी खंडशीला मदननालिका ॥१६५४॥

त्रिलोचना मनोहारी, पांशुः सरभसुयोषिति ।
श्रवणायां भिक्षुणी स्याद्वेश्यायां तु सगोलिका ॥१६५५॥

वारवाणिः कामलेखा, क्षुद्रा चेट्यां गणेरुका ।
वहेवा कुंभदासी च, पुत्रे तु कुलधारकः ॥११९६॥
सदायादो द्वितीयश्च, पुत्र्यां धिदा समर्धुका ।
देहसंचारिणी चाप्यपत्ये संतानसंतती ॥११९७॥
नेप्ता तु दुहितुः पुत्रे, स्यात्कनिष्ठे तु कन्यसः ।
ज्येष्ठभगिन्यां तु वीरभवंती स्यात्तु नर्मणि ॥११९८॥
सुखोत्सवो रागरसो, विनोदोऽपि किलोऽपिच ।
वध्यो जनित्रो रेतोधास्ताते जानी तु मातरि ॥११९९॥
देहे सिनं प्रमधुश्चतुःशाखं पडंगकम् ।
व्याधिस्थानं च देहैकदेशे गात्रं कचे पुनः ॥१२००॥
वृजिनो वेल्लितायोऽश्रो(स्रो), धम्मिल्ले मौलिजूटकौ ।
वेंवरी तु कवर्या स्यात्, प्रक्रोम्यो विपदे कचे ॥१२०१॥
मुखे दंतालयस्तेरं, धनं चेरं घनोत्तमम् ।
कर्णप्रांतस्तु धारा स्यात्, कर्णमूलं तु शीलकम् ॥१२०२॥
अक्षिण रूपग्रहो देवदीपो नासा तु गंधहृत् ।
नसा गंधवहा नस्या, नासिकेयं गंधनालिका ॥१२०३॥
ओष्ठे तु दशनोच्छिष्टो, रसालेपी च वाग्दलम् ।
श्मश्रुणि श्यमनं कोटो, दंते मुखखुरः खरुः ॥१२०४॥

दालुर्जिह्वा तु रसिका, रास्ना च रसमातृका ।
रसा कोकुर्दल्लना च, वक्त्रदलं तु तालुनि ॥१६६५॥
अवटौ तु शिरःपीठं, कफोणौ रत्निठक्कम् ।
बाहूपबाहुसंधिश्च, हस्ते सुमदलः सलः ॥१६६६॥
अथ व्यामे वियामः स्याद्बाहुचापस्तनूतलः ।
हृद्यसेहं मर्मचरं, गुणाधिष्ठानकं त्रसम् ॥१६६७॥
स्तनौ तु धरणावग्रे, तयोः पिप्पलमेचकौ ।
जठरे मलुको रोमलतावारोऽथ क्लोमनि ॥१६६८॥
स्यात्तालकं कुप्पं क्लोममथ नाभौ पुतारिका ।
सिरामूलं कटीकूपौ, तूबलिंगौ रताबुके ॥१६६९॥
शिश्ने तु लंगुलं शंकुं, लांगूलं शेफशेफसी ।
रक्ते तु शोध्यकीलाले, मांसे तुदूषः समारटम् ॥१६७०॥
लेपनं च रोमणि तु, त्वङ्मलं वालपुत्रकः ।
कूपजो मांसनिर्यासः, परित्राणमथ स्नसा ॥१६७१॥
तंत्री नखोस्नावानः, संधिचर्वनमित्यपि ।
अगुरौ प्रवरं शृंगं, शीर्षकं मृदुलं लघु ॥१६७२॥
वरद्रुमः परमदः, प्रकरं गंधदारु च ।
चंदने पुमरेकांगं, मद्रश्रीः फलकीत्यपि ॥१६७३॥

जातीफले सौमनसं, पुटकं मदशौंडकम् ।
कोशफलं कुंकुमे तु, करटं वासनीयकम् ॥११७४॥
प्रियंगु पीतकावेरं, घोरं पुष्परजो वरम् ।
कुसुंभं च जरापुष्पं, कुसुमान्तं च गौरवम् ॥११७५॥
वृक्षधूपे तु श्रीवेष्टो, दधिक्षीरघृताह्वयः ।
रचनायां परिस्पंदः, प्रतियत्नोऽथ कुंडले ॥११७६॥
कर्णान्दशों मेखला तु, लोलिनी कटिमालिका ।
अथ किङ्किण्यां घर्घरी, विद्यों विद्यामणिस्तथा ॥११७७॥
नूपुरे तु पादशीली, मंदीरं पादनालिका ।
पादांगुलीयके पादपालिका पादकीलिका ॥११७८॥
वस्त्रे निवसनं वस्त्रं, संज्ञं कर्पटमित्यपि ।
दशासु वस्त्रपेश्योऽथ, हिमशातापहांशुके ॥११७९॥
द्विलहैको वरकेश्च, चक्रवर्तिन्यधीश्वरः ।
अर्जुने विभयश्चित्रयोधी चित्रांगसूदनः ॥११८०॥
योगी धन्वी कृष्णपक्षो, नंदिघोषस्तु तद्रथः ।
ग्रंथिकस्तु सहदेवो, नकुलस्तंतिपालकः ॥११८१॥
माद्रेयाविमौ कौंतेया, भीमार्जुनयुधिष्ठिराः ।
द्वयेऽपि पांडवेयाः स्युः, पांडवाःपांडवायनाः ॥११८२॥

राज्ञश्छत्रे नृपलक्ष्म, चमरः स्यात्तु चामरे ।
स्यान्न्यायद्रष्टरि स्थेयो, द्वाःस्थो द्वाःस्थितिदर्शकः ॥११८३॥

क्षुद्रोपकरणानां स्यादध्यक्षः पारिकर्मिकः ।
पुराध्यक्षे कोट्टपतिः, पौरिको दांडपाशिकः ॥११८४॥

वेध्ये निमित्तं बाणे तु, लक्षहा मर्म्मभेदनः
धीरश्च धीरशंकुश्च, कौदंबोऽप्यर्द्धकंटकः ॥११८५॥

नाराचे लोहनालोऽस्त्रसायकोऽसिस्तु सायकः ।
धीगर्भो विभयः शास्ता, व्यवहारः प्रभाकरः ॥११८६॥

धर्मपालोऽक्षरो देवस्तीक्ष्णकर्म्मा दुरासदः ।
प्रसंगो रुद्रतनयो, मनुज्येष्ठः शिवंकरः ॥११८७॥

करपालो विशसनस्तीक्ष्णधारो विषाग्रगः ।
धर्म्मप्रचारो धौरांगो, धाराधरकौलिकौ ॥११८८॥

चन्द्रभासश्च रौद्रोऽपि, क्षुरपत्री कोशशायिका ।
पत्रं च धेनुका पत्रपाले तु दुधातृका ॥११८९॥

कुन्ती पत्रफलाऽपि, शक्तिः कासूर्महाफला ।
अष्टतालाऽऽयता सा च, पट्टिशस्तु खुरोपमः ॥११९०॥

लोहदंडस्तीक्ष्णधारो, दुःस्फोटोऽऽस्फोटौ समौ ।
चक्रं तु वक्ष्यमाणरसंचितमित्यपि ॥११९१॥

शतघ्नी तु चतुस्तीला, लोहकंटकैसंचिता ।
अयःकंटकसञ्छन्ना, शतघ्न्येव महाशिला ॥१९२॥
मुषुण्ढी स्याद्दारुमयी, वृत्तायःकीलसंचिता ।
कर्णयो लोहमात्रोऽप्य, चिरिका तु द्रुघ्रमिका ॥१९३॥
वराहकर्णकोऽन्वर्थः, फलपत्रामके हुलम् ।
मुनैयोऽश्रिशेखरं च, शरास्थोस उपासनम् ॥१९४॥
जिष्णौ तु विभेयी जैत्रे, स्यात् श्रृंगाली तु विप्लवे ।
करमच्ये सौम्यं तीर्थमथ स्यान्निगमे तपः ॥१९५॥
सत्यवत्यां गंधवती, मत्स्योदर्येथ वकये ।
माटकोऽप साक्षिणि स्यात्, मध्यस्थः प्राश्निकोऽप्यथ १९६
कूटसाक्षी मृषासाक्ष्ये, सुंवी स्याद् दुष्टसाक्षिणि ।
पादुकायां पादरथी, पादगंगुः पदत्वैरा ॥१९७॥
पादवीथी च पेशी च, पादवीठी पदायता ।
नापिते ग्रामणीर्मद्विवाहसौरिकैर्माडिकाः ॥१९८॥

## इति शेषनाममालायां नरकांडस्तृतीयः

अथ पृथ्वी महाकांता, क्षांता मेरुद्रिकर्णिका ।
गोत्रकीला पर्वश्रेणी, मध्यलोका जगद्रुहा ॥१९९॥

देहिनी केलिनी मौलिर्महास्थौरस्यंबास्थैली ।
गिरौ प्रपाती कुट्टार, उर्वङ्गः कंदराकरः ॥१७००॥
कैलासे धनदावासो, हराद्रिर्हिमवद्धसः ।
मलयश्चंदनगिरिः, स्याल्लोहेऽभीनेधीवरे ॥१७०१॥
ताम्रे पवित्रं कांस्यं च, सीसके तु महाबलम् ।
चीनपट्टं समोलूकं, कृष्णं च त्रपुबंधकं ॥१७०२॥
त्रपुणि श्वेतरूप्यं स्यात्, शैठं सलवणं रसैः ।
परीसं मधुकं ज्येष्ठं, घनं च मुखभूषणम् ॥१७०३॥
रजते त्रापुषं वंगं, जीवनं वसु भीरुकम् ।
शुभ्रं सौम्यं च शोध्यं च, रूपं भीरुनवीर्यसम् ॥१७०४॥
सुवर्णे लोभनं शुक्रं, तारजीवनमौजसम् ।
दाक्षायणं रक्तवर्णं श्रीमेकुंभं शिलोद्भवम् ॥१७०५॥
वैणवं तु कर्णिकाराच्छायं वेणुतटीभवम् ।
जन्ये दिव्यमिरीसैव्यं, कूपीटं घृतपंकुरम् ॥१७०६॥
विषं विप्पलपातालजनच्छिनानि च कंबलम् ।
पावनं पेहूसं चापि, पल्लूरं तु सितं पयः ॥१७०७॥
क्रिट्टिमं तदतिक्षारं, शालूकं पंकगंधिकम् ।
अंपं तु कलुपं तोयमतिस्वच्छं तु कौशिपम् ॥१७०८॥

समुद्रे तु महाकच्छः, दारदो धरणीप्लवः ।
महीप्रावार उर्वङ्गस्तिमिकोशो महाशयः ॥१७०९॥

सुरन्दला तु सुरेला सुरवेला सुनंदिनी ।
चर्मण्वती रन्तिनदी, संभेदः सिन्धुसंगमः ॥१७१०॥

नौका तु सारणावयौ, वेमिदीर्घः सपंतभुक् ।
पर्परीकः पविर्वासिः, धुंधुर्वर्घुरिराशिरः ॥१७११॥

जुहुराणः प्रदीक्षुश्च, कृपीटकुहविनो हविः ।
घृतार्चिर्नाचिकेतश्च, धृष्ठो वंचतिरं चेतिः ॥१७१२॥

धुनिर्मरपेपीयो चास्वनिः पवनवाहनः ।
वायौ सुराछेयः प्राणः, संभृतो जलभूषणः ॥१७१३॥

शुचिर्वहो लोलघंटः, पश्चिमोत्तरदिक्पतिः ।
अंकतिः क्षिपेणुर्मकी, ध्वनप्रहरणश्चेलः ॥१७१४॥

शीतलो जलतारो, मेघारिः पूर्परोऽपि च ।
वृक्षे स्यारोहकः स्कंधी, सीमिको हरितच्छदः ॥१७१५॥

उरुर्नर्तुरंहिपश्च, स्यात्तु धेनः कपर्दके ।
खद्योते तु कीटमणिर्ज्योतिमाली तमोमणिः ॥१७१६॥

परांचुदो निमिषद्युत्, ध्वांक्षमित्रोऽथ कुंजरे ।
पंचकी पूर्दकारी पद्मी, पेचिलः सुनिकोधरः ॥१७१७॥

विलोमजिह्वोऽनःस्वेदो, महाकायो महामदः ।
सूर्पकर्णो जलाकांक्षो, भेटी च षष्टिहायनः ॥१७१८॥
अंसुरो दीर्घपवनः, शुंडालः पविरित्यपि ।
वशायां वासितो कर्णधारिणी गणिका(कणिका)पिच ॥१९॥
अश्वे तु क्रमेणः कुण्डी, प्रोथी हेषी प्रकीर्णकः ।
पाचकः पैलवः किंध्वी, कुटेरः सिंहविक्रमः ॥१७२०॥
मांपाशी केसरी हंसो, मुहुर्भुग् गूढभोजनः ।
वार्मुदवः शालिहोत्रो, लक्ष्मीपुत्रो मरुद्रथः ॥१७२१॥
चामरपुत्रीकोऽपि स्यादश्वायां पुनर्वेती ।
मल्लिकाक्षः सितैर्नेत्रैः, स्याद्वामीर्द्रोणुघोऽसितैः ॥१७२२॥
ककुदी ककुदावर्त्ती, निर्मुष्कस्त्विद्रवृद्धिकः ।
शुनि क्रोधी रसापायी, शिवारिः सूचको रुरुः ॥१७२३॥
वनंतपः स्वजातिद्विट्, कृतज्ञो मह्लेहश्च सः ।
दीर्घनादः पुरोगामी, स्याद्दिमैहकामुकः ॥१७२४॥
मर्दलः कपिलो ग्राममृगश्चंद्रसहोऽपिच ।
महिषे कलुषः पिंगः, कटाहो गद्गदस्वरः ॥१७२५॥
हेरंबः स्कंधशृंगश्च, सिंहे तु स्यात्पलंकषः ।
शैलाटो वनराजश्च, नमःकांतो गणेश्वरः ॥१७२६॥

शृंगोष्णीपो रक्तजिह्वो व्यादीर्णास्यः सुगंधिकः ।
शूकरे कुमुखः कामरूपी च सलिलप्रियः ॥१७२७॥
खलेक्षणो वक्रदंष्ट्रः, पंकक्रीडनकोऽपि च ।
मृगे त्वजिनयोनिः स्यादपो भुजगभोजिनि ॥१७२८॥
अहीरणीर्द्विमुखश्च, भवेत् पक्षिणि चंचुमान् ।
कंठाग्निः कीकसमुखो, लोमकी रसनारदः ॥१७२९॥
वारंगिनाडीचरणौ, मयूरे चित्रपिंगलः ।
नृत्यप्रियः स्थिरमदः, खिलखिल्लो गरव्रत. ॥१७३०॥
मार्जारकंठो मरूको, मेघनादानुलासक ।
मयूको बहुलग्रीवो, नगावासश्च चंद्रकी ॥१७३१॥
कोकिले तु मदोल्लापी, काकजातो रतोद्वहः ।
मधुघोषो मधुरकंठः, सुधाकंठः कुहूमुखः ॥१७३२॥
घोषयित्नुः पोषयित्नुः, कामतालः कुनालिकः ।
कुक्कुटे तु दीर्घनादः, चर्मचूडो नखायुधः ॥१७३३॥
मयूरचटकः शौंडो, रणेच्छुश्च कलाधिकः ।
कार्णी विष्किरो बोधिर्नदीकःपुष्टिवर्धनः ॥१७३४॥
चित्रवाजो महायोगी, स्वस्तिको मणिकंठकः ।
उषाकीलो विशोकश्च, ग्रामस्तु ग्रामकुक्कुटः ॥१७३५॥

हंसेषु तु मरालाः स्युः, सारसे दीर्घजानुकः ।
गोनर्दो मैथुनी कामी, श्येनाक्षो रक्तमस्तकः ॥१७३६॥
गृध्रे तु पुरुषव्याघ्रः, कामायुः कुणितेक्षणः ।
सुदर्शनः शकुन्त्यौ, शुके तु प्रियदर्शकः ॥१७३७॥
श्रीमान् मेधातिथिर्वाग्ग्मी, मत्स्ये तु जलपिप्पिकः ।
मूको जलाशयः शेवः, सहस्रदंष्ट्रस्त्वेतनः ॥१७३८॥
जलवालो वदालोऽथ, पाठीने मृदुपाठकः ।

इति शेषसंग्रहनाममालायां चतुर्थकांडः ॥

अथ रत्नप्रभा घर्मा, वशा तु शर्कराप्रभा ॥१७३९॥
स्याद्वालुकाप्रभा शैला, भवेत्पंकप्रभाऽञ्जना ।
धूमप्रभा पुना रिष्टा, माघव्या तु तमःप्रभा ॥१७४०॥
महातमप्रभा माघव्येवं नरकभूमयः ।

**इति नारककांडः पंचमः ॥ ५ ॥**

आनुकूल्यार्थकं प्राध्वंमसाकल्ये तु चिंचनं ॥१७४१॥
तु हि च स्म ह वै पादपूरणे पूजने स्वती ।
वद् वा यथा तथैवैवं, साम्येऽहो ही ॥ विस्मये॥१७४२॥
स्युरेवं तु पुनर्वैवेत्यवधारणवाचकाः ।
ऊं पृच्छायामतीते प्राक्, निश्चयेऽद्धाञ्जसा द्वयम् ॥१७४३॥

अतो हेतौ महः प्रत्यारंभेऽथ स्वयमात्मनि ।
प्रशंसने तु सुष्ठु स्यात्, परश्वः श्वः परेऽहनि ॥१७४४॥

अद्यात्राह्न्यथ पूर्वेऽह्नीत्यादौ पूर्वेद्युरादयः ।
समानेऽहनि सद्यः स्यात्, परे त्वह्नि परेद्यवि ॥१७४५॥

उभयद्युस्तूभयेद्युः, समे युगपदेकदा ।
स्यात्तदानीं तदा तर्हि, यदा यर्ह्यन्यदैकदा ॥१७४६॥

परुत्परार्यैषमोऽब्दे, पूर्वे पूर्वतरेऽत्र च ।
प्रकारेऽन्यथेतरथा, कथमित्थं यथा तथा ॥१७४७॥

द्विधा द्वेधा त्रिधा त्रेधा, चतुर्धा द्वैधमादि च ।
द्विस्त्रिश्चतुःपंचकृत्व, इत्याद्यावर्त्तने कृते ॥१७४८॥

दिग्देशकाले पूर्वादौ, प्रागुदक्प्रत्यगादयः ।
अव्ययानामनंतत्वाद्दिग्मात्रमिह दर्शितम् ॥१७४९॥

इयंत इति संख्यानं, निपातानां न विद्यते ।
प्रयोजनवशादेते, निपात्यंते पदे पदे ॥१७५०॥

इत्याचार्यश्रीहेमचंद्रविरचिता शेषनाममाला ॥

:

# अथ श्रीमज्जिनदेवमुनीश्वरविरचितः शिलोञ्छः

अर्हं बीजं नमस्कृत्य, गुरूणामुपदेशतः ।
श्रीहैमनाममालायाः, शिलोञ्छैः क्रियते मया ॥१७९१॥
सर्वीये इत्यपि जिने, संभवेः शंभवेऽपि च ।
श्रीसुव्रते मुनिरपि, नेमौ नेमीत्यपीष्यते ॥१७९२॥
षष्ठे गणेशे मण्डितपुत्रोऽपि कथ्यते बुधैः ।
मरुदेव्यपि विज्ञेया, युगादिजिनमातरि ॥१७९३॥
चक्रेश्वर्यामप्रतिचक्रोऽप्यजितापि कविभिरजितबला ।
श्यामाऽच्युतदेव्यपि सुतारिकोक्ता सुतारापि ॥१७९४॥
भद्रंकृद्भद्रकरोऽपि, श्रमणः श्रवणोऽपि च ।
भद्रंभद्रमपि प्राहुः, प्रशस्तमपि कोविदाः ॥१७९५॥
प्रव्रज्याऽपि परिव्रज्या, शिष्योऽन्तेषदेपि स्मृतः ।
इति प्रथमकाण्डस्य, शिलोञ्छोऽयं समर्थितः ॥१७९६॥

---

(१) शिलोञ्छो नाम उपात्तशस्यात् क्षेत्रात् शेषावचयनं, तद्वदत्रापि हैमनाममालायाः अवशेषशब्दावचयनं कृतम् । (२) 'भद्रोऽपि' इत्यभिधानचिन्तामणिः ।

व्योमयानमपि प्रोक्तं, विमानं बुधपुङ्गवैः ।
स्यात्समुद्रनवनीतं, पियूषमपि चामृतम् ॥१७५७॥
कथ्यन्ते व्यन्तरा वानमन्तरा अपि सूरिभिः ।
द्योतैस्तया पृष्णिमुष्णी[3],प्रोक्ता रश्म्यभिधायकाः॥१७५८
समुद्रनवनीतं च, विदुश्चन्द्रमसं बुधाः ।
चन्द्रिका चन्द्रिभाऽपि स्यादिल्वला इन्वका अपि॥१७५९
अनुराधाऽप्यनूराधा, गुरुः सप्तर्षिजोऽपि[1] च ।
सौरिः सौरोऽपि राहुस्तु, महकल्लोल इत्यपि ॥१७६०॥
अभ्रपिशाचोऽपि तथा, नाडिका नालिकोऽपि च ।
रात्रौ यामवतीतुङ्गयौ, निःसंपातो निशीथवत् ॥१७६१॥
तमः स्यादन्धतमसं,[1] वर्षाः स्युर्वर्षिणो अपि ।
खेऽन्तरीक्षं[1] सांसृष्टकमपि तत्काळजे फले ॥१७६२॥
मेघमाला कालिकोऽपि, वार्दलं[1] चापि दुर्दिने ।
सुत्रामायीन्द्रे शतारः, शतधारोऽपि चाशनौ ॥१७६३॥
•आश्विनेयौ[1] स्वर्गवैद्यौ, हर्यक्षोऽपि[1] धनाधिपे ।
अजगवमजगावमपि शङ्करधन्वनि ॥१७६४॥

---

१ 'घृणिमरिश्म्यन्ते' इत्यभिधानचिन्तामणिः । २ 'बाहुलका-देर्धन्ते 'सन्धातमभ्रमित्यपि' इत्यभिधानचिन्तामणिः । ३ सूत्रा-मायी इत्यंतः शशिवत् ।

गौर्यां दाक्षायणीश्चर्यौ, नारायणे जलेशयः ।
कौमोदकी कौपोदकी[1], ओं ई शब्दौ श्रियां मतौ॥ १७६५

कन्दुः कन्दर्पे सिद्धार्थः, सुगते परिकीर्त्तितः ।
अङ्के व्याख्याविवाहाभ्यां, प्रेङ्खोलिरपि पञ्चमे ॥१७६६॥

दृष्टिपातो द्वादशाङ्गचां, कल्याणेऽवन्ध्यमव्यय ।
निंदा गर्हा जुगुप्सायां, क्षारणा रतिगालिषु ॥१७६७॥

समाख्यापि समाज्ञावद्बहुशतीवद्बहुशत्यपि ।
काल्याऽपि कल्या संधायां, समाधिरपि कथ्यते॥ १७६८॥

व्रीडेः सूक्तो मन्दाक्षश्च, ह्रियामूहोऽपि चोहवत् ।
तन्द्रिस्तन्द्री च निद्रायामहंप्रथमिकापि च ॥१७६९॥

अहंपूर्विकायां केलीकीलोऽपि स्याद्विदूषके ।
मौर्यवन्मौरिपोऽगीति, शिलोञ्छो देवकाण्डगः ॥१७७०॥

स्तनन्धये स्तनपेश्च, क्षीरपेश्चाभिधीयते ।
तारुण्यं स्याद्यौवनिका, दशमीस्थो जरत्तरः ॥१७७१॥

कवितापि कविः स्यात् तत्कर्मणि कृतेकृत्यकृतिकृतार्थाश्च ।
कुटिलाशयोऽपि कुचरोऽन्यगजडशठेष्वप्यनेडमूकस्तु। १७७२

---

१ ' अहमग्रिका च '

वदान्यौ[1] पृथगित्यन्ये, दानशीलेऽप्रियंवदौ[1] ।
मूर्खे यथोद्गतोऽपीष्ये, श्रीमानेपि बुधैः स्मृतः ॥१७७३॥

विवधकेऽवीवधिकावेपि वैवधिके प्रतिचैरोऽपि भृत्ये स्यात् ।
संमार्जको[1] बहुकरे बहुपान्याऽर्जके इतीष्यते च परैः॥१७७४

विहङ्गिकायां च विहङ्गिर्मोऽप्यथौर्ध्वदेहिके ।
और्ध्वदैहिकैमप्याहुरनृतो शण्ठे इत्यपि ॥१७७५॥

मायाविमायिकौ[1] धूर्ते, कपटे तूपधा मता ।
चौरेश्चोरोऽपि विज्ञेयः, स्तेयं स्तैन्यैमपीष्यते ॥१७७६॥

दाने प्रादेशनेमपि, क्षमा स्यात् क्षान्तिरित्यपि ।
क्रोधनेः कोपनस्तृष्णक्, पिपासितोऽपि कथ्यते॥१७७७॥

मस्तकेः स्यादाशिरोऽपि, मर्जितापि च मार्जितो ।
पेयूषमेपि पीयूषं, कूचिकापि च कूर्चिका ॥१७७८॥

द्रप्से द्रप्स्यमपि प्रोक्तं, विमिपिच्छ[1] च पिच्छिले ।
व्योषे त्रिकटुकं जगौ, अमनं अवनं तथा ॥१७७९॥

आघ्राणोऽपि भवेत्तृप्तौ, शौष्कलः पिशिताशिनि ।
मनोराज्यमेनोगव्यावपि स्यातां मनोरथे ॥१७८०॥

---

१ 'दानशीलप्रियवाचौ वदान्यौ पृथक्' इत्यभिधानचिन्तामणिः।

कामुके कमनोऽपि[1] स्यादाक्षारितोऽपि[1] दूषिते ।
संशयालुः सांशयिकी[1], जागरितापि जागरी ॥१७८१॥
पूजितेऽपचायितोऽपि[1], तुन्दिमोदरिकावपि ।
तुन्दिके स्युर्ऽगोऽपि कुब्जे, खेलतोऽप्यैन्द्रलुप्तिके॥१७८२
पामरोऽपि कच्छुरोऽतीसारक्यप्यतिसारकी ।
कुण्ठतिरपि खर्जूतिर्विस्फोटैः पिटके स्मृतः ॥१७८३॥
कोठे मण्डलकमपि, गुदकीलोऽपि चाऽर्शसि ।
मेहः प्रमेहवदायुर्वेदकोऽपि चिकित्सके ॥१७८४॥
आयुष्मानपि दीर्घायुः, कथ्यतेऽथ परीक्षकः ।
स्यादाक्षपाटलिकोऽपि[1], पारिषद्योऽपि[1] सभ्यवत्॥१७८५
स्युर्नैमित्तिकनैमित्तमौहूर्ती गणके लिपौ ।
लिखितोऽपि मषी मेला, कुल्किके कुलकोऽपि च ॥१७८६
अष्टापदे बुधैः शारिफलकोऽपि निगद्यते ।
मनोजवस्तातवुल्ये, प्रभविष्णुरपि क्षमे ॥१७८७॥
आह्निके सङ्गाकरोऽपि[1], चानुगोऽप्यनुगामिनि ।
पर्य्येषणोपासनेऽपि, शुश्रूषायामधीयने ॥१७८८॥

---

१ 'कुण्ठयत्थङ्गम्' इत्यभिधानचिन्तामणिव्युत्पत्त्या द्वितीयान्तं लभ्यते । २ 'आयुर्वेदिक-' इत्यभिधानचिन्तामणिः ।

आतिथ्योऽप्यतिथौ तुल्येऽभिजो गोत्रे तु सन्ततिः ।
महेला योषितौ च स्त्री, तरुणी युवतीत्यपि ॥१७८९॥
सुवासिनी चरिण्टी च, चिरण्टी च चरण्ट्यपि ।
वधूट्यां पत्न्यां कराची, गेहिनी सहधर्मिणी ॥१७९०॥
सधर्मचारिणी चापि, स्नुषायां तु वधूट्यपि ।
प्रेमवत्यपि कान्तायां, प्राणिग्रहो विवोदरि ॥१७९१॥
पैरिणेतोपयन्ता च, यौतके दाय इत्यपि ।
दिधीपूर्दिधिषूर्जीवत्पत्नी जीवत्पतिः समे ॥१७९२॥
तुल्ये अवीरानिर्वीरे, श्रवणाश्रवणे तथा ।
रण्डापि विधवा पुष्पवती स्यात्पुष्पितापि च ॥ १७९३॥
पुष्पे कुसुममप्युक्तं, पशुधर्मोऽपि मोहने ।
सहोदरे सगर्भोऽपि, स्यादग्रजवदग्रिमः ॥१७९४॥
शण्ढः शठः षण्डुरपि, क्लीबो माता जनित्र्यपि ।
चिहुरा अपि केशाः स्युः, कर्णः शब्दग्रहोऽपि च ॥९५॥
नेत्रं विलोचनमपि, सृक्कणी सृक्वणी अपि ।
दाढिको दाढिकापि स्यात्कपोणिस्तु कफोणिवत् ॥९६॥
कूर्परे कूर्परः सिहतले संहतलोऽपि च ।
चट्टकोऽपि चटौ मुष्के, स्यादाण्डः पेलकोऽपि च॥९७॥

पैत्पादैङ्घ्रिश्चै चरणे, कीकसं हड्डमित्यपि ।
कपाळं शकलमैपि, पृष्ठास्थनि कशारुकौ ॥१७९८॥
मज्जायामस्थितेजोऽपि[१], नाडीषु नाडिनाटिके[२] ।
सिङ्घाणकोऽपि सिङ्घाणैः, स्तृणीकौ स्तृणिकौपि च॥९९॥
शान्तः पातिपश्चै विड्गूयेऽशुचि[१]र्वेशोऽपि[१] वेपवत् ।
उत्सादनोच्छादेने च, प्लवैप्लावौ[२] तथा समौ[२] ॥१८००॥
वंशाकं कृमिजग्धं नागरौ स्यादथ वाह्लिकम् ।
सङ्कोचं पिशुनं कर्ण्यममृक्संज्ञं च कुङ्कुमे ॥१८०१॥
जापके काष्ठानुसार्य्यं, यावनोऽपि च सिल्हके ।
मकुटोऽपि[१] कोटीरे, चित्रकश्चे विशेषके ॥१८०२॥
वतंसोऽप्यवतंसे स्यात्पत्रभंग्यां तु वल्लरी[१] ।
मंञ्जरी[२] च पत्रपारिरित्यपी रथ्यावनथ्यया ॥१८०३॥
कर्णान्दुरपि कर्णान्दुः, परिहार्य्येऽपि कङ्कणः ।
रिङ्कणी[१] किङ्किणी तुल्ये, आच्छादोच्छादने[१] समे
कूर्पासेऽप्यङ्गिका कक्षापटे कक्षापुटोऽपि[१] च ।
कुथे वर्णपरिस्तोमे इत्यन्तर्ङ जगुः परे ॥१८०४॥

---

१ ' शृङ्गीका, शृङ्गिका ' इत्यभिधानचिन्तामणिः । २ ' आच्छादनार्थे ' इत्यभिधान० । ३ पत्रमञ्जरी ।

तत्रास्तरणमिति च पल्यङ्कोऽप्यवसक्थिका ।
यमन्यपि प्रतिसीरा, संस्तरः प्रस्तरोऽपि च ॥१८०६॥
पतद्ग्राहेप्रतिग्राहावपि स्यातां पतद्ग्रहे ।
मकुरोऽप्यात्मदर्शोऽथ, कशिपुः कसिपुः समौ ॥१८०७॥
यावकोऽलक्तको यावे, तुल्ये व्यजनवीजने ।
गीरीयको गिरिकोऽपि, बालक्रीडनके मतौ ॥१८०८॥
गण्डकोऽपि गन्दुको राट्, मूर्द्धावसिक्त इत्यपि ।
भरतः सर्वदमनोऽप्यथ दाशरथावुभौ ॥१८०९॥
रामचन्द्रराममद्रौ, हनूमानपि मारुतौ ।
वाली सुग्रीवाग्रजोऽपि, पार्थे बीभत्सुरित्यपि ॥१८१०॥
सातवाहनवत्सालवाहनोऽपि प्रकीर्तितः ।
परिच्छदः परिजनः, परिवर्कमित्यपि ॥१८११॥
मन्त्री बुद्धिसहायोऽपि, वेत्री वेत्रधरोऽपि च ।
हेमाध्यक्षे हैरिकोऽपि, टंकपतिस्तु नैष्किके ॥१८१२॥
शुद्धान्ताध्यक्ष आन्तर्वेश्मिकान्तःपुरिकावपि ।
सहायेसाप्तपदीनौ, सख्यावसुहृद्व्यौ ॥१८१३॥
नये नीतिरपि स्कन्धावारेऽपि शिबिरो मतः ।
मयन्त्यपि वैमयन्त्यां, पताकापि प्रकीर्त्यते ॥१८१४॥

ध्वजः पताकादण्डोऽपि, झम्फानं याप्ययानवत् ।
सादी सव्येष्ठोऽपि सूते, कवचितोऽपि वर्मिते ॥१८१५॥
कवचे दंशनं त्वक्रं, तनुत्राणमपि स्मृतम् ।
अक्षियोगं वियोगं चाधिकाङ्गवदुदाहृतम् ॥१८१६॥
शिरस्कं खोडमप्याहुः, स्यान्निषङ्गचैपि तूणिनि ।
चापे धनूर्धनुशरासनान्यपि विदुर्बुधाः ॥१८१७॥
फरकस्फरकौ खेटे, क्षुरिका छुरिका छुरी ।
इल्म्यां तरवालिकापि, परिघः पलिघः समौ ॥१८१८॥
उर्भस्त्र्युर्भस्त्राने मगधो, मंपो बोधकरोऽर्थिकः ।
सौखशायनिके सौख्यशाय्यिकौ सौखसुप्तिके ॥१८१९॥
रणे संस्फेटसंफेटौ, बले द्रविणमूर्क् तथा ।
अवस्कन्दोऽपि धाट्यां स्यात्प्रशनेष पलायने ॥१८२०॥
चारकोऽपि भवेद् गुप्तौ, तापसे तु तपस्व्यपि ।
विप्रे ब्रह्मोऽपि चाग्नीध्राऽनीध्रोऽप्यथ वृषो वृसी ॥१८२१॥
स्नासने शमनेधाय, दधि प्राग्र्यं पृषातके ।
अग्निहोत्र्यग्न्योहितोऽप्यथोपवासे समाविधौ ॥१८२२॥

---

१ 'मद्गुरः' इत्यभिधानचिन्तामणौ ।

उपवस्त्रमौपवस्त्रमुपवीते प्रचक्षते ।
ब्रह्मसूत्रं पवित्रञ्च, वाल्मीकौ द्वाविमावपि ॥१८२३॥
मौत्रावरुण्यादिकवी, पर्शुरामोऽपि भार्गवे ।
योगीशो याज्ञवल्क्योऽपि, दाक्षीपुत्रोऽपि पाणिनौ ॥२४॥
स्फोटायनः स्फौटायनिः, कात्यो वररुचौ तथा ।
फाणिवैः पाछकान्ये, चाणक्यश्चणकात्मजे ॥१८२५॥
वैशेषिके कणादोऽपि, जैनोऽनैकान्तवाद्यपि ।
चार्वाके लौकायतिकः, क्लीवः प्रसूनेमित्येपि ॥१८२६॥
न्यासार्पणे परिदानं, वणिक् आपणिकैः स्मृतः ।
अयुते नियुतं पोते, स्मृतं प्रवहणं बुधैः ॥१८२७॥
कर्णोऽपारित्रे दुर्गस्य, गवेश्वरोऽपि गोमति ।
कर्णिके क्षेत्रजीवोऽपि, कोटीशो लोष्टभेदनः ॥१८२८॥
मार्द्वीकमपि मद्येऽनुतर्षोऽपि चषके स्मृतः ।
छविन्दे तन्त्रवायोऽपि, वेमा व्योमापि कीर्त्यते ॥१८२९॥
रजको धावकोऽप्युक्तः, पादत्राणेऽस्य पादुका ।
तैलिकस्तैलंतुदोऽपि, रथकारोऽपि वर्द्धकिः ॥१८३०॥

---

(१) ' क्षपणः ' इत्यभिधानचिन्तामणौ ।

चित्रकारो लेखकश्च, लेपकृल्लेपकोऽपि च ।
कुतूहले विनोदोऽपि, सौनिकः खट्टिकोऽपि च ॥१८३१॥
कूटयन्त्रे पाशयन्त्रं, समौ चाण्डालपुष्कसौ ।
इत्थं तृतीयकाण्डस्य, शिलोञ्छोऽयं समर्थितः ॥१८३२॥
रत्नवती भुवि दिवस्पृथिव्यावपि रोदसी ।
माणिबन्धं माणिमंतं, सैन्धवे वसुके वसु ॥१८३३॥
टङ्कनष्टङ्कणे उपावर्त्तनं चापि नीवृति ।
भङ्गलः स्याज्जाङ्गलोऽपि, मालवन्मालको मतः ॥१८३४॥
पत्तने पट्टनमपि, कुण्डिने कुण्डिनापुरम् ।
स्यात्कुण्डिनपुरमपि, विपणौ पण्यवीथिका ॥१८३५॥
सुरङ्गायां सन्धिरपि, गृहे धामेमपि स्मृतम् ।
उपकार्य्योपकार्य्यापि, प्रासादे च प्रसादनः ॥१८३६॥
शान्तीगृहं शान्तिगृहे, प्राङ्गणं त्वङ्गणं मतम् ।
कपाटवत्कवाटोऽपि, पक्षद्वारे खडक्किका ॥१८३७॥
कुसूलवत्कुशूलोऽपि, सम्पुटे पुटं इत्यपि ।
पेटायां स्यात्पेटकोऽपि, पेटापि कृतिनां मता॥१८३८॥
पयन्त्यपि समूहिन्यामयोनि मुपत्त विदुः ।
कण्डोलके पिटकोऽपि, पुस्त्यामन्तीति कथ्यते ॥१८३९॥

खर्जः खजाकोऽपि[२] मथि, विष्कम्भे. कटकोऽप्य् तु ।
अगोऽपि[१] पर्वते क्रौञ्चे[२], क्रोञ्चस्त्वन्यते बुधैः ॥१८४०॥
कलव्ये्पि खटिन्यां स्यात्ताम्रमौदुम्बरं विदुः ।
शातकुम्भमपि स्वर्णं, पारदश्चपलोऽपि च ॥१८४१॥
रसजातं[१] रसाग्र्यं च, तुत्थे दार्वीरसोद्भवे ।
गौक्षिके वैष्णपोऽपि स्याद्गोपित्तं हरितालके ॥१८४२॥
मनःशिलायां नेपाली[१], शिली च सुधिया मता ।
शृङ्गारमपि सिन्दूरे, कुरुविन्दे तु हिङ्गुलेः ॥१८४३॥
बोलो[१] गोपरसोऽप्युक्तो, रत्नं माणिक्यमित्यपि ।
पद्मरागे शोणिरत्नं[१], वैराट्टो[१] राजपट्टवत् ॥१८४४॥
नीले मणौ महानीलं[१], कमलेषमपि वारिणि ।
धूमिका धूमहिषी,धूमर्या[३] मिहिकाः समाः ॥१८४५॥
अकूवारोऽपि[१] जलधौ, मकरालय इत्यपि ।
निम्नगायां ह्रादिनी[१] स्याज्जह्नुकन्यापि जाह्नवी ॥४६॥
कलिन्दपुत्री कालीन्दी[१], रेवा मेकलकन्यका ।,
चान्द्रभागा चन्द्रभागा, गोमती गोमतीत्यपि ॥१८४७॥
चक्राण्यपि पुटभेदाः, पङ्के चिखल्ले इत्यपि ।
उद्घोतनोद्घाटने[१] च, घटीयन्त्रे प्रकीर्तिते ॥१८४८॥

सरस्तडागैस्तटाकोऽप्यथ तलैश्च पल्वले ।
आशयैशाशुष्मैर्बर्हि बहिर्हैत्यदमूर्नैसः ॥१८४९॥
अग्नौ क्षणप्रभौ विद्युद्गन्धवाहैसदागती ।
वायौ चरणपेऽपि द्रुस्त्वकं त्वचौ स्तबके पुनः ॥१८९०॥
गुलुञ्छेलुञ्छचौ माकन्दरसालावपि चूतवत् ।
किङ्कराते कुरण्टकेकुरुण्डकावपि स्मृतौ ॥१८९१॥
कर्कन्धूरपि कर्कन्धौ, ह्रस्वादिश्चाटरूषकैः ।
वाशा च स्नुहिः स्नुहीऽपि, पियालोऽपि प्रियालवत् ॥
॥१८९२॥
नाग्यैङ्गोऽपि च नागङ्गोऽक्षे विभेदके इत्यपि ।
भवेत्तमालस्तापिच्छो, निर्गुण्डी सिन्दुवारवत् ॥१८९३॥
जपा जवा मातुलुङ्गो, मातुलिङ्गोऽपि कीर्त्तितः ।
धत्तूर इव धुत्तूरो, मंशस्त्वक्मारे इत्यपि ॥१८९४॥
ह्रीबेरं केशसलिलपर्यायैः स्वर्च्यते बुधैः ।
पङ्कजिन्यां कमलिनी, कुमुदिनी कुमुद्वती ॥१८९५॥
बिसप्रसूनं कमले, कुमुत्कुमुदवन्मतम् ।
शैपालं च जलनीली, सातीनोऽपि सतीनवत् ॥१८९६॥
कुल्मासवत्कुल्माषोऽपि, गवेधुको गवीधुको ।
कणिशं कनिशं सिद्धे, धान्ये त्वावासितं मतम् १८९७

हालाहलं हालहलं, मुस्तायां मुस्तकोऽपि च ।
कृमिः क्रिमिरपि गण्डूपदः किंचुलुकोऽपि च ॥११८८॥
शम्बुका अपि शम्बूका, वृश्चिको द्रुत इत्यपि ।
मसलो मधुकरोलिः, पिक्को पिकः करिः करी ॥११८९॥
व्यालो व्याडोऽप्यौपवाह्योऽप्युपवह्योऽपरा वशा ।
शृङ्खले निगलोऽन्दुश्च, कक्षा वक्ष्यापि वाह्लिके ॥११९०॥
वाह्लीकोऽपि वल्गवाभे, खलिनश्च खलीनवत् ।
मौर्योऽग्रपृष्ठे गोपतौ तु, शंडे इश्वरं इत्यपि ॥११९१॥
स्यौरी स्यूटर्यपि ककुदे, ककुत्ककुदमित्यपि ।
नैचिकं नैचिकी च स्यान्मलिनी बालगर्भिणी ॥११९२॥
पवित्रं गोमये छागे, शुभोऽथ मपर्कः शुनि ।
सैरभो देवशुन्यां च, यमरथोऽपि सैरिभे ॥११९३॥
पारिन्द्र इव पारीन्द्रः, शरभेऽष्टापदोऽपि च ।
सृगालश्चशृगालोऽपि, प्लवगः प्रवगोऽपि च ॥११९४॥
वानायुरपि वातायुरुन्दुरोऽपि च मूषके ।
द्वीकुर्वनबिडालोऽपि, गोकर्णोऽपि मुमक्रमे ॥११९५॥
जलव्यालेऽलगर्दोऽपि, शेषः स्यादेककुण्डलः ।
आशीराशी च दंष्ट्रायां, निर्मोके निल्वयन्यपि ॥११९६॥

पतत्री पतत्रिरपि, पिच्छं पिञ्छमपि स्मृतम् ।
परपुष्टोऽन्यभृतौ च, पिके बर्हिणि बर्हिणः ॥१८६७॥
वायसे बलिपुष्टोऽपि, द्रोणोऽपि द्रोणकाकवत् ।
सारसा लक्ष्मणी क्रौञ्चा, क्रुञ्चौ चाषे दिविःकिकीः॥१८६८
किकिदीविरपि प्रोक्तष्टिट्टिभे टीटिभोऽपि च ।
कलविङ्के कुलिङ्गोऽपि, दात्यूहे कालकण्ठकः ॥१८६९॥
दात्यूहोऽपि बलाका च, बकेरुर्विसकण्ठिका ।
मेधाव्यपि शुके तैलपायिकायां निशाटनी ॥१८७०॥
कपोते पारावतोऽपि, मत्स्ये मच्छोऽप तन्तुणे ।
स्मृतो वरुणपाशोऽपि, नक्रे शङ्कुमुखोऽपि च ॥१८७१॥
उद्धारैः कृपया इत्येष, तिर्यक्काण्डः शिलोञ्छितः ।
नारकास्तु नैरयिकाः, पाताले तु तलं रसा ॥१८७२॥
इति पञ्चमकाण्डस्य, शिलोञ्छोऽयं समर्थितः ।
जीवोऽपि चेतने जन्तौ, प्राणी जन्मोऽपि जन्मिनि १८७३
जीवातुर्जीविते ऽप्यायुः, पुंस्युदन्तोऽपि वार्त्तायाम् ।
सङ्कल्पे स्याद्विकल्पोऽपि, मनो नेन्द्रियमप्यथ ॥१८७४॥
शर्म सौख्यं पीडा बाधा, चर्चा चर्चोऽपि कथ्यते ।
विप्रतीसारोऽनुशयेऽपार्थो ऽप्यपीन्द्रियार्थवत् ॥१८७५॥

प्राप्ते विन्ने विस्मृते च, भवेत्प्रस्मृतमित्यपि ।
अटाटाऽट्यां पर्य्यटनैमानुपूर्व्यमनुक्रमे ॥१८८५॥
परीरम्भोऽपि संश्लेषे, स्यादुद्घातोऽप्युपक्रमे ।
जातो जातमपि स्पर्द्धा, सङ्घर्षोऽप्यथ विक्रिया ॥१८८६॥
विकारो विकृतिश्चापि, विलम्भस्तु समर्पणे ।
दिष्ट्या समुपजोषं सर्वदा सदा सनतं सनात् ॥१८८७॥
निर्भरे च स्वैती हेतौ, येन तेन च कीर्त्तितौ ।
अहो सम्बोधनेऽपीति, षष्ठ काण्ड शिलोञ्छित १८८८
वैक्रमेऽब्दत्रिचत्रिचन्द्रमिते (१८३१) राधाद्यपक्षतौ ।
अन्योऽयं ददृभे श्रीमज्जिनदेवमुनीश्वरैः ॥१८८९॥

॥ इति श्रीजिनदेवसूरिदृब्धः शिलोञ्छः ॥

इति श्री हेमचन्द्राचार्यदृब्धे नाममालाशेषमाले
श्रीजिनदेवसूरित शिलोञ्छम् समाप्तः

पाटल्यां पाटला स्थाल्यमोघा तोयाधिवासिनी ।
वसन्तकामयोर्दूती, कुम्भिका कालवृन्तिका ॥ १९०८
अन्यस्यां तत्र तु श्वेता, पाटला काष्ठपाटला ।
शीतला श्वेतकुम्भीका, कुबेराक्षी फलेरुहा ॥ १९०९
अगुरावगुरुर्लोहं, वंशिकं विश्वरूपकम् ।
कृमिजं प्रवरं राजार्हं, स्याद् योगजमनार्यकम् ॥ १९१०
मङ्गिगन्धेऽत्र मङ्गल्या, कृष्णे तु काकतुण्डकः ।
श्रीखण्डे स्यान्मलयजं, चन्दनं श्वेतचन्दनम् ॥ १९११
गोशीर्षकं गन्धसारं, भद्रश्रीस्तैलपर्णिकम् ।
फलकी सुरभिः सारं, महार्हं रोहणोद्भवम् ॥ १९१२
अथ वर्बरके श्वेतं, निर्गन्धं बर्बरोद्भवम् ।
स्याद्रक्तचन्दने क्षुद्रचन्दनं भास्करप्रियम् ॥ १९१३
ताम्रसारं रक्तसारं, लोहितं हरिचन्दनम् ।
कुचन्दने तु पत्राङ्गं, पत्त(त्र)ाङ्गं पट्टरञ्जनम् ॥ १९१४
सुरङ्गकं रक्तकाष्ठं, पत्तूरं तिलपर्णिका ।
अथ द्रुमोत्पलव्याधः, परिव्याधः सुगन्धकः ॥ १९१५
निर्गन्धेऽस्मिन् कर्णिकारो, निपीयः पीतपुष्पकः ।
पुंनागे तु महानागः, केसरो रक्तकेसरः ॥ १९१६
देववल्लभकुम्भीकौ, तुङ्गः पुरुषनामकः ।
अथागस्त्ये वङ्गसेनः, शुकनासो मुनिद्रुमः ॥ १९१७

करवीरे कणवीरः, श्वेतपुष्पोऽश्वमारकः ।
प्रतिहासः शतप्रासोऽश्वारोहः कुमुदोद्भवः ॥ १९१८
रक्तपुष्पेऽत्र लगुडश्चण्डातश्चण्डगुल्मकौ ।
कालस्कन्धस्तमाले स्यात्तापिच्छो रञ्जतो वसुः ॥ १९१९
तमालपत्रे वस्त्राख्यं, रोमशं तामसं दलम् ।
सूक्ष्मैलायां चन्द्रबाला, द्राविडी निष्कुटिस्त्रुटिः ॥ १९२०
कपोतवर्णिका तुच्छा, कोरङ्गी बहुला तुला ।
स्थूलैलायां बृहदेला, पत्रैला त्वक्सुगन्धिका ॥ १९२१
त्रिदिवोद्भवा पृथ्वीका, कर्णिका त्रिपुटा पुटा ।
कर्पूरे घनसारः स्याद्धिमाह्वो हिमवालुकः ॥ १९२२
सिताभ्रः शीतलरजः, स्फटिकश्चन्द्रनामकः ।
कङ्कोलके कटुफलं, कोमलं मागधोत्थितम् ॥ १९२३
कोलं कोपफलं कोरं, मारीचं द्वीपमित्यपि ।
लवङ्गे शिखरं दिव्यं, भृङ्गारं वारिजं लवम् ॥ १९२४
श्रीपुष्पं श्र्याह्वयं देवपुष्पं चन्दनपुष्पकम् ।
नलिकायां कपोताङ्घ्रिर्निर्मध्या शुषिरा नटी ॥ १९२५
धमन्यञ्जनकेशी च, शून्या विद्रुमवल्ल्यपि ।
अतिमुक्ते मुण्डकः स्यात्पुण्ड्रको भ्रमरोत्सवः ॥ १९२६
पराश्रयः सुवासन्ती, कामुको माधवी लता ।
पिप्पले बोधिरश्वत्थः, श्रीवृक्षश्चलपत्रकः ॥ १९२७

मङ्गल्यः केशवावासः, श्यामलो द्विरदाशनः ।
गर्दभाण्डे कन्दरालश्छायावृक्षः कमण्डलुः ॥ १९२८
प्लक्षो वटप्लवः शृङ्गी, सुपार्श्वश्चारुदर्शनः ।
कपीतने कपीनः स्यात्पीतनप्लवकावपि ॥ १९२९
कर्पटोऽपर्कटी प्लक्षः, सतीदो लक्षणे नटी ।
वटे वैश्रवणावासो, न्यग्रोधो बहुपाद्भवः ॥ १९३०
स्कन्धजन्मारक्तफलः, क्षीरी शृङ्गी वनस्पतिः ।
उदुम्बरे जन्तुफलो, यज्ञाङ्गो हेमदुग्धकः ॥ १९३१
सदाफलो वसुवृक्षः, श्वेतवल्को मशक्यपि ।
काकोदुम्बरिकायां तु, फाल्गुनी फल्गुवाटिका ॥ १९३२
फलराजी मलभारी, फल्यूर्जघनेफला ।
राजादने तु राजन्या, क्षीरिका प्रियदर्शनः ॥ १९३३
कपिप्रियो दृढस्कन्धो, मधुराजफलो नृपः ।
प्रियाले तु राजवृक्षो, बहुवल्को धनुष्पुटः ॥ १९३४
सन्नकद्रुः खरस्कन्धश्चारस्तापसवल्लभः ।
आम्रातके वर्षपाकी, कपिचूतः कपिप्रियः ॥ १९३५
कपीतनः पीतनकस्तनुक्षीरोऽम्रपाटकः ।
शृङ्गी कपिरसाढ्यः स्वादुम्रफलो विर्मोपणः ॥ १९३६
अर्के विकीरणोऽर्काह्वो ज्यंभला स्फोतविच्छुरा ।
क्षीरार्कपर्णो राजार्के, त्वलर्को गणरूपकः ॥ १९३७

एकाष्ठीलः सदापुष्पो, मन्दारश्च प्रतापसः ।
चुक्रा्यां वज्रो महावृक्षोऽसिपत्रः खक्सुधा गुडा ॥ १९३८
समन्तदुग्धा सीहुण्डा, शण्डेरी वक्रकण्टकः ।
क्रूरमर्दे करमन्दः, कराम्रकसुषेणकौ ॥ १९३९
स्वल्पर्कटे आविग्नः, कृष्णपाकफलोऽपि च ।
जम्बीरे जम्भलो जम्भो, जम्भीलो दन्तहर्षणः ॥ १९४०
वक्त्रशोधी दन्तशठो, गम्भीरो रोचनोऽपि च ।
करुणे तु छागलाख्यो, मल्लिकाकुसुमः प्रियः ॥ १९४१
बीजपूरे बीजपूर्णः, पूरकः फलपूरकः ।
सुपूरको मातुलुङ्गः, केसराम्लोऽम्लकेसरः ॥ १९४२
वराम्लो बीजको लुङ्गो, रुचको मध्यकेसरः ।
कृमिघ्नो गन्धकुसुमः, केसरी साधुपादपः ॥ १९४३
मातुलुङ्गी वर्धमाना, मधुरा मधुकुक्कुटी ।
मधुवल्ली पूतिपुष्पा, देवदूती महाबला ॥ १९४४
आम्लिकायां चुक्रिकाम्ला, शुक्तिकाम्ली विकाम्लिका ।
चुक्रा चिंचा तिन्तिडीका, तिन्तिला गुरुपुष्पिका ॥ १९४५
वृक्षाम्ले स्यादम्लवृक्षस्तिन्तिडीको महीरुहः ।
शाकाम्लमम्लशाकं चाम्लपूरो रक्तपूरकः ॥ १९४६
अथाम्लवेतसे भीमो, भेदनो रक्तपूरकः ।
रुधिरसायफश्चुक्रं, मांसारिर्वानिकप्रियः ॥ १९४७

शाखाम्लो वेतसोऽम्लोऽम्लस्तिन्तिडीको रसाम्लकः।
स शङ्खद्रावको हीनो, लौहद्रावक उत्तमः॥ १९४८
तावेव तु शतवेधिसहस्रवेधिनौ क्रमात्।
कपित्थे वानरावासो, गन्धपत्रः कपिप्रियः॥ १९४९
पुष्पफलो दधिफलो, दधित्थग्राहिमन्मथाः।
अक्षिस्पंदो दन्तशठो, राजाम्राश्चिरपाक्यपि॥ १९५०
अश्मन्तके श्लक्ष्णपत्रः, पाषाणावृक इन्द्रकः।
अम्लपत्रस्ताम्रपत्रः, कुशली यमलच्छदः॥ १९५१
नारङ्गे स्यान्नागरङ्गस्त्वक्सुगन्धो मुखप्रियः।
ऐरावतो योगसारो, योगी तक्राधिवासनः॥ १९५२
खदिरे स्याद्रक्तसारः, कण्टकी दन्तधावनः।
गायत्री बालपत्रश्च, जिह्वाशल्यं क्षितिक्षमः॥ १९५३
सिते तु तत्र कदरः, कार्मुकः कुब्जकण्टकः।
सोमवल्को नेमिवृक्षः, श्यामसारः पथिद्रुमः॥ १९५४
विट्खदिरे त्विरिमिदो, गोधास्कन्धोऽरिमेदकः।
अरिमारोऽरिमः पूत्यरिमेदो मुखशोधनः॥ १९५५
शाल्मली तूलिनी मोचा, पिच्छिला विरजा चिता।
कुक्कुटी पूरणी रक्तकुसुमा घुणवल्लभा॥ १९५६
कण्टकाढ्याऽनलफली, पिच्छा तु तस्य वेष्टकः।
कुशाल्मली शाल्मलिका, रोचनः कूटशाल्मलिः॥ १९५७

शिंशिपायां महाश्यामा, पिच्छिला पाण्डुरच्छदा ।
कृष्णसाराऽङ्गारवर्णा, गुरुरल्पा तु शिंशिपा ॥ १९५८
कुशिंशिपा भस्मगर्भा, कपिला भस्मपिङ्गला ।
बदर्यां कुवलिः कोलिः, कर्कन्धुः फेनिलच्छदा ॥ १९५९
राष्ट्रवृद्धिकरी कोली, सौवीरी वज्रशिल्पिका ।
घुटा घोण्टा कोपघोण्टा, व्याघ्रगृध्रनखीत्यपि ॥ १९६०
शम्यां सक्तुफला लक्ष्मीः, शिवा तुङ्गाऽग्निपादपः ।
अजप्रिया भस्मकाष्ठा, शंकरः शिवकीलिका ॥ १९६१
शिवलोमा यतफला, लोमपामविनाशिनी ।
मङ्गल्या शुचिपत्रा च, फले तस्यास्तु साङ्गरः ॥ १९६२
इङ्गुद्यां तापसतरुर्मार्जारः कण्टकीटकः ।
विन्दुकस्तिक्तमज्जा च, पूतिपुष्पफलोऽपि च ॥ १९६३
गुग्गुलौ तु पुरो दुर्गो, महिषाक्षः पलङ्कषः ।
जटायुः कालनिर्यासो, वासवोलूकनामकः ॥ १९६४
नक्तंचरः शिवधूपः, कुम्भोलूखलकः शिवः ।
पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः ॥ १९६५
करीरे स्यात्तीक्ष्णसारः, शाकपुष्पो मृदुः फलः ।
मरुजन्मा गूढपत्रो, ग्रन्थिलक्रकरावपि ॥ १९६६
विकङ्कते स्रुवावृक्षो, ग्रन्थिलः स्वादुकण्टकः ।
केकणिः काकपादश्च, व्याघ्रपादोऽपकण्टकः ॥ १९६७

बिल्वे महाफलः श्याद्वः, शलाटुः पूतिमारुतः।
महाकपित्थं शाण्डिल्यः, शैलूषो नीलमल्लिका॥ १९६८
श्रीवासः श्रीफलो ह्यगन्धो मालूरकर्कटौ।
हरीतक्यां जया पथ्या, हैमवत्यभयाऽमृता॥ १९६९
कायस्था पूतना चेतक्यव्यथा श्रेयसी शिवा।
बिभीतके भूतवासो, वासन्तोऽक्षो वहेडकः॥ १९७०
संवर्तकः कर्षफलः, कल्को हार्यः कलिद्रुमः।
कर्षो दैत्यो मधुबीजो, धर्मद्वेषी विभेदकः॥ १९७१
आमलक्यां शिवा धात्री, वयस्था षड्रसाऽमृता।
मर्यकाख्या तिष्यफला, माकन्दी श्रीफला च सा॥ १९७२
अरणावग्निमन्थः स्यात्तर्कारी वैजयन्तिका।
जया जयन्ती श्रीपर्णी, कर्णिका गणिकारिका॥ १९७३
तेजोमन्थो हविर्मन्थो, नादेयी वह्निशोधनः।
अरलो दुन्दुको दीर्घवृन्तानतः कुटंनटः॥ १९७४
श्योनाकः शोषणो जम्बुः, शुकनासः कुटंभरः।
मयूरजङ्घः कट्वङ्गः, सल्लकः प्रियजीवकः॥ १९७५
मण्डूकपर्णः पत्रोर्णो, गोपवृक्षो मुनिद्रुमः।
शिग्रौ शोभाञ्जनस्तीक्ष्णगन्धो मूलकपल्लवः॥ १९७६
विद्रध्यरातिः काक्षीवो, मुखभङ्गः सुभञ्जनः।
दृशोऽक्षीवः सुरङ्गी च, मोचको मधुगृञ्जनः॥ १९७७

श्वेतेऽत्र श्वेतमरिचो, रक्ते तु मधुशिग्रुकः ।
तिनिशे रथकृन्नेमिर्वञ्जुलो रथसाधकः ॥ १९७८
दीर्घवृक्षश्चक्रकरो, रथनामातिमुक्तकः ।
अश्मगर्भः सर्वसारः, क्रमसंधारणोऽपि च ॥ १९७९
पलाशे किंशुकः पर्णः, स्वरपर्णस्त्रिपत्रकः ।
त्रिवृन्ताख्यो रक्तपुष्पो, बीजस्नेहः समिद्वरः ॥ १९८०
क्षारश्रेष्ठो वातपोथो, याज्ञिको ब्रह्मपादपः ।
धवे भारोद्वहो गौरः, सकटाक्षो धुरंधरः ॥ १९८१
कुलावो नन्दिनश्चापि, सितः कृष्णश्च स द्विधा ।
श्रीपर्णी काश्मरी कृष्णा, शून्तिका मधुपर्णिका ॥ १९८२
गम्भारी सर्वतोभद्रा, कट्फला भद्रपर्णिका ।
विहारी कुमुदाहारी, महाकुम्भी च कश्मरी ॥ १९८३
नित्यभद्रा महाभद्रा, काश्मर्यो मधुमत्यपि ।
सप्तच्छदे शुक्तिपर्णो, गुच्छः पुष्पः सुवर्णकः ॥ १९८४
स्थूलपर्णो दीपवृक्षः शारदो विषमच्छदः ।
मदगन्धिर्विशालत्वग्गजद्विट् शाल्मलीदलः ॥ १९८५
शिरोरुर्गेहविटपः, सुमनो महनाशनः ।
आरग्वधे कृतमालः, कर्णिकारः सुवर्णकः ॥ १९८६
पीतपुष्पो दीर्घफलः, शम्पाकश्चतुरङ्गुलः ।
व्याधिहा रेवतः स्थूलः, प्रग्रहो राजपादपः ॥ १९८७

आरोग्यशिम्बिका कर्णी, स्वर्णशेफालिकेत्यपि ।
वीजके प्रियकः शौरिर्गौरो बन्धूकपुष्पकः ॥ १९८८
कृष्णसर्जो महासर्जः, कल्याणः पीतरोऽसनः ।
महाशालः पीतशालो, जीवकः प्रियशालकः ॥ १९८९
सुगन्धिर्नीलनिर्यासस्तिष्यः पुष्पोऽल्कप्रियः ।
स तु द्विधा शिखिग्रीवः, श्रेष्ठो गोमूत्रगन्धकः ॥ १९९०
अश्वकर्णे दीर्घपत्रः, कषायः सस्यसंवरः ।
सर्जकः शर्जकः शूरः, कार्श्यशालो ल्तातरुः ॥ १९९१
अर्जुने ककुभः सेव्यः, सुवर्णो धूर्तपादपः ।
देवशाकः शक्रतरुर्नदीसर्जोऽर्जुनाभिधः ॥ १९९२
शाके कोलफलो द्वारदारुर्योगी ह्लीसकः ।
गन्धसार' स्थिरसारः, स्थिरको भुवसाधनः ॥ १९९३
अभ्रंलिहो महापत्रो, बलसारो बलप्रभः ।
धर्मणे तु धनुर्वृक्षो, गोत्रवृक्षो रुजासहः ॥ १९९४
महाबलो महावृक्षो, राजाह्वो धन्वनः फलम् ।
स्वादुफलो मृत्युफलः, सारवृक्षः सुतेजनः ॥ १९९५
सिल्हके तु सिद्धवृक्षः, कोलिपत्रे तु जोरणः ।
महापत्रे त्वगदी स्याद्विषशङ्कुः पलाशकः ॥ १९९६
पारिभद्रे द्रुकिलिमं, किलिमं देववल्लभः ।
दारुकं स्नेहविद्धं च, देवद्रुः सर्गतो द्रुमः ॥ १९९७

पीतपूतिमहादेवभेदेन्द्रा काष्ठदारुणी ।
मधूके मधुशाकः स्यान्माधवो मधुको मधुः ॥ १९९८
मधुष्ठीलो मधुष्ठालो, मधुकाष्ठो मधुस्रवः ।
रोध्रः कोपमधुर्गुडपुष्पो गोलफलोऽपि च ॥ १९९९
जलजेऽस्मिन्मधूलः स्याद्गिरिजो दीर्घपत्रकः ।
तीरवृक्षो गौरशाको, ह्रस्वपुष्पफलोऽपि च ॥ २०००
तिन्दुके स्फूर्जनस्तुष्टः, कालस्कन्धो विरूपकः ।
निःस्यन्दनः कालशाको, द्रावणो नीलसारकः ॥ २००१
द्वितीयतिन्दुके कालस्तिन्दुर्मर्कटतिन्दुकः ।
काकेन्दुकः काकपीलुः, कुपालुकुलकावपि ॥ २००२
रोध्रे लोध्रः सिते तत्र, शाबरस्तनुवल्कलः ।
उत्सादनो महारोध्रोऽन्नम्भः शंबरपादपः ॥ २००३
रक्ते तु पट्टिका तिल्वः, पट्टी लाक्षा प्रसादनः ।
तिरीटो मार्जनश्चिली, कानीनः क्रमुकः शिशुः ॥ २००४
स्थूलवल्को बृहत्पत्रः, कृष्णरोध्रे तु गालवः ।
भूर्जे भुजो बहुपटो, मृदुवल्को मृदुच्छदः ॥ २००५
रैम्यापत्रश्छत्रपत्रो, बहुत्वक्चर्मिणावपि ।
श्लेष्मान्तके भूतवृक्षः, पिच्छिलो द्विजकुत्सितः ॥ २००६
वसन्तकुसुमः शेलुः, कर्पेल्लुर्लेखशाटकः ।
निषधाती बहुवारः, शीत उद्दालकः शलुः ॥ २००७

लकुचे लकुटो ग्रन्थिफलाम्बुपनसा मद्गुः ।
लघुत्वक् क्षुद्रपनसस्तनु स्यात्कुब्जकं फलम् ॥ २००८
आम्रे रसालो माकन्दः, कामाङ्गः पिकबान्धवः ।
वनपुष्पोऽशवश्चूतः, परपुष्टो मदोद्भवः ॥ २००९
मधुदूतो मधुफलः, सुफलो मदिरासखः ।
वसन्तपादपोऽसौ तु, सहकारोऽतिसौरभः ॥ २०१०
क्षुद्राम्रे स्यात्क्रमितरुर्लाक्षावृक्षो जतुद्रुमः ।
सुकोशको घनस्कन्धः, केशाम्बुश्च सुरक्तसः ॥ २०११
टङ्को नीलकपित्थोऽन्यो, राजपुत्रो नृपात्मजः ।
जम्ब्वां महाफला राजजम्बूर्नीलाम्बुजच्छदा ॥ २०१२
सुगन्धिपत्रा साऽन्या तु, काकजम्बूः कुजम्बुका ।
उशीरपत्रा नादेयी, वैदेशी काकवल्लभा ॥ २०१३
मदने श्वसनो राठः, शल्यको विषनाशकः ।
करहाटो मरुयकः, पिण्डी पिण्डीतकः फलः ॥ २०१४
सूर्यपुत्रकर्कटकौ, विषगन्धो विषोदरः ।
मत्स्यान्तकफलो राजपुत्रकः कफवर्धनः ॥ २०१५
कुब्जके कामुकं श्यामसारः फुल्लो मिसिद्रुमः ।
निचुले तु नदीकान्तोऽम्बुजो हिज्जुल इज्जलः ॥ २०१६
गन्धपुष्पो गुच्छफलोऽनुवाकः कच्छकोल्यपि ।
वेतसे विदुलः शीतो, नदीकूलप्रियो रथः ॥ २०१७

अम्रपुष्पः पत्रमाली, वाणीरो वञ्जुलोऽपि च ।
स्यादम्बुवेतसे मीरुर्नादेयी वाल्मीरुकः ॥ २०१८
विदुलो मञ्जरीनम्रः, परिव्याधो निकुञ्जकः ।
वरुणे गन्धवृक्षः स्यात्तिक्तशाकः कुमारकः ॥ २०१९
श्वेतपुष्पः श्वेतफलस्तमालो मारुतापहः ।
साधुवृक्षः श्वेतवृक्षः, सेतुरश्मरिकारिपुः ॥ २०२०
अङ्कोटे स्यात्पीतसारो, दीर्घकीलो निकोचकः ।
अङ्कोलकस्ताम्रफलो, रेचको गन्धपुष्पकः ॥ २०२१
भिल्लातके वीरतरुररुष्कोऽरुष्करो व्रणः ।
भौतिको भूतनुद्वह्निरस्नेहः शोफकरो धनुः ॥ २०२२
अग्निमुखी बहुपत्रो, भल्ली सूर्याग्निसंज्ञकः ।
अरिष्टे स्यात्कृष्णवर्णो, रक्तबीजोऽर्थसाधनः ॥ २०२३
शुभनामा शीतफेनः, फेनिलो गर्भपातनः ।
निम्बे तु सर्वतोभद्रः, पारिभद्रः सुतिक्तकः ॥ २०२४
पिचुमन्दो यवनेष्टः, शुकेष्टः शुकमालकः ।
अरिष्टो हिङ्गुनिर्यासो, वेता नियमनोऽपि च ॥ २०२५
महानिम्बे निम्बकरः, कार्मुको विषमुष्टिकः ।
रम्यकः क्षीयको वृक्षोऽक्षिपीलुः केशमुष्टिकः ॥ २०२६
पीलौ संमी सहस्राङ्गः, शीतः करभवल्लभः ।
गुल्मारिर्गुडफलश्चाथार्तिस्तु गिरिसंभवे ॥ २०२७

अक्षोटः कर्परालश्च, फलस्नेहो गुहाशयः ।
पारावते तु साराम्लो, रक्तमालः परावतः ॥ २०२८
आरेवतः सारफलो, महापारावतो महान् ।
कपोताण्डतुल्यफलो, रुद्राक्षे तु महामुनिः ॥ २०२९
स तु चतुर्मुखो ब्रह्मा, द्विमुखस्तु वरार्गलः ।
षण्मुखस्तु कार्त्तिकेयः, पञ्चमुखस्तु शंकरः ॥ २०३०
माधवस्त्वेकवदनो, विजयाशस्त्रधारणः ।
पुत्रंजीवे त्वक्षफलः, कुमारजीवनामकः ॥ २०३१
करञ्जे स्यान्नक्तमालः, पूतीकश्चिरबिल्वकः ।
करजः श्रीपदारिश्च, प्रकीर्णः कलिनाशनः ॥ २०३२
भेदास्त्वस्य त्रयस्तत्र, षड्ग्रन्था हस्तिवारुणी ।
कर्मचां तु कृतमाल, उदकार्यः प्रकार्यकः ॥ २०३३
अङ्गारवल्ल्यां शार्ङ्गेष्ठा, कासघ्नी करतालिका ।
रोहीतके रोहितको, रोही दाडिमपुष्पकः ॥ २०३४
रोहेडकः सदापुष्पो, रोचना प्लीहरक्तहा ।
कट्फले तु सोमवल्कः, कैडर्यो गोपभद्रिका ॥ २०३५
कुम्भी कुमुदिका भद्रा, श्रीपर्णी भद्रवत्यपि ।
दाडिमे कुट्टिमः कीरवल्लभः फलषाण्डवः ॥ २०३६
करको दन्तबीजश्चाथोडपुष्पे जपा जवा ।
धातक्यां [illegible] धातुपुष्पा, वह्निपुष्प्यग्निपुष्पिका ॥ २०३७

ताम्रपर्णी सुभिक्षा च, कुञ्जरा मद्यपावनी ।
सल्लक्यां वल्लकी ह्लादा, सुवहा सुस्रवा रसा ॥ २०३८
अश्वमूर्तिः कुन्दरुकी, गजभक्ष्या महेरणा ।
गन्धवीरा गन्धकारी, सुरभिर्वनकर्णिका ॥ २०३९
एरण्डे तरुणश्चित्रो, दीर्घदण्डो व्यडम्बकः ।
पञ्चाङ्गुलो वर्द्धमान, आमण्डो रुवको रुवूः ॥ २०४०
व्याघ्रपुच्छो व्याघ्रतलश्चञ्चुरुत्तानपत्रकः ।
गन्धर्वहस्तकश्चञ्चुरादण्डो हस्तिपर्णकः ॥ २०४१
उरुवूको हस्तिकर्णः, शुक्लो रक्तश्च स द्विधा ।
किम्पाके तु महाकालः, फाकर्दः काकमर्दकः ॥ २०४२
कम्पिल्लके तु काम्पिल्लो, रक्ताङ्गो रक्तचूर्णकः ।
चन्द्राह्वयो रेचनकः, कर्कशाङ्गः पटोदयः ॥ २०४३
केतकच्छदनीयोऽम्बुप्रसादनफलः कतः ।
कार्पास्या तु समुद्रान्ता, बदरा तुण्डिकेर्यपि ॥ २०४४
सा तु वन्या भरद्वाजी, भद्रा चन्दनवीजिका ।
वन्दायां स्याच्चटरहो, शीम्यर्यपदरोहिणी ॥ २०४५
वृक्षादनी वृक्षरुजो, जयन्ती कामपादपः ।
स तु क्षीरवृक्षभवो, नन्दीवृक्षो जयद्रुमः ॥ २०४६
आटरूपे वृषो वासा, वाशिका वाजिदन्तकः ।
भिण्डमाना भिण्डमुन्, सिंहास्या सिंहपर्णिका ॥ २०४७

शुम्बरी सानुजः सौरः, सौरलो(सो) वनजोदकः ।
तीक्ष्णवल्कस्तीक्ष्णफलस्तीक्ष्णपत्रो महामुनिः ॥ २०४८
कदल्यां तु हस्तिविषा, रम्भा मोचाऽंशुमत्फला ।
काष्ठीला वारणवुशा, स्यात्कालीरस इत्यपि ॥ २०४९
तगरे कालानुसार्यं, चक्राख्यो मधुको नृपः ।
तूले तूदं ब्रह्मदारु, ब्रह्मण्यं ब्रह्मकाष्ठकम् ॥ २०५०
ब्रह्मनिष्ठं च दापं च, क्रमुकं ब्रह्मचारि च ।
मुष्कके मूर्खको घण्टा, क्रन्दालो मोक्षमुंचकौ ॥ २०५१
पाटलिर्गोलिहः क्षारश्रेष्ठः कृष्णः सितश्च सः ।
वंशो यवफलो वेणुः, शतपर्वा तृणध्वजः ॥ २०५२
मस्करस्त्वचिसारस्त्वक्सारकर्मारतेजनाः ।
गाङ्गेरुच्यां विश्वदेवदेवा ह्रस्वा गवेधुका ॥ २०५३
खण्डारिष्ठा नागबला, खरबन्धनिकेत्यपि ।
दार्वी दारुहरिद्रायां, पीता कण्टकसेरुका ॥ २०५४
पीतद्रुमः पीतदारु, पीतनं पीतचन्दनम् ।
पर्जनी कर्कटकिनी, कालेयकः पचम्पचा ॥ २०५५
ग्रन्थिपर्णे क्लिष्टपर्णं, विकीर्णं शीर्णरोमकम् ।
हरितं कुकुरं पुष्पं, शुकगच्छं शुकच्छदम् ॥ २०५६
स्थौणेयकं वह्निचूडा, सुगन्धग्रन्थिकावपि ।
स्पृक्कायां ब्राह्मणी पङ्क्मुष्टिकापि शुनावधूः ॥ २०५७

समुद्रान्ता मरुन्माला, निर्माल्या देवपुत्रिका ।
लङ्कातिका कोटिवर्षा, देवी पङ्कजमुष्टिका ॥ २०५८
गोमी स्वर्णलतेन्द्राणी, मरुन्माला तला लघुः ।
विडङ्गे केरला मोघा, तन्दुलः कृष्णतन्दुलः ॥ २०५९
वेल्लकः (भसक.) कृमिहा जन्तुघातको मृगगामिनी ।
इन्द्राक्षे ऋषभो वीरः, श्रीमान्वृषभनामकः ॥ २०६०
धूर्धुरो गोपतिः शृङ्गी, बन्धुरः पृथिवीपतिः ।
ऋद्धौ सिद्धिर्युगं योग्यं, रथाङ्गं मङ्गलं वसु ॥ २०६१
ऋषिसृष्टसुखं लक्ष्मीर्वृद्धेरप्याह्वया अमी ।
पद्मके मालकः पीतो, रक्तश्च रुसरुश्यवः ॥ २०६२
सुशुभः शीतवीर्यश्च, पाटलः पीतवर्णकः ।
कङ्कुष्टे स्यात्काककुष्टः, पुलकः काकपालकः ॥ २०६३
रेचनः शोधनो हासो, विडङ्गो रङ्गदायकः ।
परूपके स्यादल्पास्थिः, परुपो नीलपर्णकः ॥ २०६४
परोऽपरः परश्चैव, परिमण्डल इत्यपि ।
खर्जूरे त्वग्रजः पिण्डी, निःश्रेणिः स्वादुमस्तकः ॥ २०६५
खर्जूरिकायां स्याद्भूमिखर्जूरी काककर्कटी ।
ताले तलो लेख्यपत्रस्तृणराजो ध्वजद्रुमः ॥ २०६६
नालिकेरे रसफलो, लाङ्गली कूर्चकेसरः ।
' णाख्यो मौढफलो, नारिकेरो लतातरुः ॥ २०६७

पूगे गुवाकः क्रमुकः, पूगी च (खपुरा) नीलवल्कलः ।
घण्टाऽस्य फलमुद्वेगं, चिक्के तु तत्र चिक्कणम् ॥ २०६८
विन्ताके तु रजःपुष्पो, जम्बूलः क्रमुकच्छदः ।
हिन्ताले तु तृणराजो, राजवृक्षो लताङ्कुरः ॥ २०६९
ताल्यां तु मृत्युपुष्पा स्यादेकपत्रफलापि च ।
खर्जूरतालखर्जूरीतालीहिन्तालकेतकाः ॥ २०७०
क्रमुको नालिकेरश्च, स्युरेते तृणपादपाः ॥ २०७१

इत्याचार्यश्रीहेमचन्द्रविरचिते निघण्टुशेषे प्रथमो वृक्षकाण्डः ।

---

सिन्दुवारे तु निर्गुण्डी, सीन्दुको नीलसन्धिकः ।
शीतसहा च सुरसा, चेन्द्राणी सिन्दुवारकः ॥ २०७२
सा नीला वनशेफाली, सुपुष्पा नीलमञ्जरी ।
श्वेता तु श्वेतसुरसा, गोलोमा भूतकेश्यपि ॥ २०७३
शेफालिकायां सुवहा, निर्गुण्डी नीलिकासुता ।
सुरसा रक्तवृन्ता च, श्वित्रघ्नी पुष्पवर्षिणी ॥ २०७४
सा तु शुक्ला भूतकेशी, सत्यनाम्नी बहुक्षमा ।
प्रियङ्गौ प्रियकः कङ्गुः, प्रियवल्ली प्रियालता ॥ २०७५
विष्वक्सेना गन्धफली, कारम्भा फलिनी फली ।
गुन्द्रा गोवन्दनी श्यामा, योषाह्वा पर्णभेदिनी ॥ २०७६

मधुरायां यष्टीमधुस्तल्लक्षणा मधुस्रवा ।
क्लीतकं च जलजासौ, मधुपर्णी मधूलिका ॥ २०७७
अश्वगन्धायां तुरगी, कम्बुकाश्वावरोहकः ।
अश्वकन्दो बहुगन्धा, पुत्रदा कोलकर्ण्यपि ॥ २०७८
मेषशृङ्ग्यामजशृङ्गी, वर्तिका सर्पदंष्ट्रिका ।
सैव स्याद्दक्षिणावर्ता, वृश्चिकाला विषाणिका ॥ २०७९
उष्ट्रधूमकपुच्छा च, काली च विषघातिनी ।
शृङ्गी तु कर्कटशृङ्ग्यां, नताङ्गी शिशिरेफला ॥ २०८०
कर्कदाहा महाघोषा, वक्रा मञ्जरिशिम्बिका ।
निदिग्धिकायां कण्टाली, दुःस्पर्शा कण्टकारिका ॥ २०८१
व्याघ्री क्षुद्रा दुष्प्रधर्षा, धावनी हेमपुष्पिका ।
बृहत्यां क्षुद्रभण्टाकी, वार्ताकी राष्ट्रिका कुली ॥ २०८२
विशदः सिंहनाक्रान्ता, महोटिका महत्यपि ।
विदार्यां तु स्वादुकन्दा, पुष्पकन्दा मृगालिका ॥ २०८३
वृक्षादनी चर्मकषा, भूकुष्माण्ड्यश्ववल्लभा ।
बिडालिका वृक्षपर्णी, महाश्वेता परा तु सा ॥ २०८४
क्षीरशुक्ला क्षीरकन्दा, क्षीरवल्ली पयस्विनी ।
स्कन्धगन्धेक्षुगन्धेक्षुवल्ली क्षीरविदारिका ॥ २०८५
पृश्निपर्ण्यां पृथक्पर्णी, लाङ्गली क्रोष्टुपुच्छिका ।
शृगालपर्णी कलशी, धृतिघ्ना धावनी गुहा ॥ २०८६

सिंहपुच्छी चित्रपर्ण्यङ्घ्रिपर्णी तिलपर्ण्यपि ।
गोक्षुरे स्थलशृङ्गाटवनशृङ्गाटगोक्षुराः ॥ २०८७
कण्टी पडङ्गी गोकण्टस्त्रिकण्टस्तु त्रिकस्त्रिकः ।
इक्षुगन्धा व्यालदंष्ट्रः, श्वदंष्ट्रः स्वादुकण्टकः ॥ २०८८
पलङ्कषा कण्टफलः, षडङ्गस्तुक्षुरः क्षुरः ।
दन्त्यां शीघ्रोपशल्या च, चित्रोदुम्बरपर्णिका ॥ २०८९
मकूलको रामदूती, निकुम्भो घुणवल्लभा ।
नागदन्त्यां हस्तिदन्ती, वारुणी चापि चिर्भिटी ॥ २०९०
मृगादनी मृगैर्वारुर्मृगाक्षी भुजगस्फटा ।
श्वेतपुष्पा मधुपुष्पा पर्वपुष्पा, विषौषधिः ॥ २०९१
अपामार्गे त्वधःशल्या, किणिही खरमञ्जरी ।
धामार्गवः शैखरिको, वशिरः कपिपिप्पली ॥ २०९२
कपिवल्ली मर्कटिका, शिखर्योघाटदुर्ग्रहौ ।
प्रत्यक्पुष्पी पत्रपुष्पी, केशवल्ली मयूरकः ॥ २०९३
पुनर्नवायां शृश्लीरो, दीर्घपत्रा शिलाटिका ।
विशाखः क्षुद्रवर्षाभूः, कटिल्लः प्रावृषायणी ॥ २०९४
शोफघ्नी चापरा त्वेपा, क्रूरमण्डलपत्रकः ।
श्वेतमूला महावर्षा, मूर्वर्पकेतुरित्यपि ॥ २०९५
ज्योतिष्मत्यां स्वर्णलता, दुर्मना लवणाग्निभा ।
पारावतपदी पण्या, ज्योतिष्का कटभीत्यपि ॥ २०९६

मापपर्ण्यां(मार्द्रमाषा मांसमासा)सूर्यपर्णी, पाण्डुश्चापि महा-
सहा ।
अश्वपुच्छा सिंहवृन्ता, कम्बोजी कृष्णवृन्तिका ॥ २०९७
मुद्गपर्ण्यां काकमुद्गा, वन्या मार्जारगन्धिका ।
शिवा क्षुद्रसहा ह्रासी, रङ्गणी सूर्यपर्णिका ॥ २०९८
भूम्यामलक्याममला, बहुपुत्रा वितुन्नकः ।
तामलक्युज्झटा ज्ञायतालिका नुन्नमालिनी ॥ २०९९
हरिद्रायां वर्णवती, काञ्चनी वरवर्णिनी ।
निशाख्या रजनी गौरी, पीतिका मेहघातिनी ॥ २१००
वेश्या विटप्रिया पिंडा, हरिता च तरङ्गिणी ।
प्रपुन्नाटे तु दद्रुघ्नश्चक्राकश्चक्रमर्दकः ॥ २१०१
मेपाक्षो मेषकुसुमः, पद्माटैडगजावपि ।
मुण्ड्यां मुण्डतिका भिक्षुः, श्रावणी जीवबोधिनी ॥ २१०२
श्रवणा श्रवणशीर्षा, प्रव्रजिता तपस्विनी ।
महाश्रावणिकायां तु, व्यथा कदम्बपुष्पिका ॥ २१०३
ग्रन्थिका लोभनीया च, च्छिन्नग्रन्थनिकापि च ।
वाकुच्यां सात्कालमेषी, दुर्गन्धा कुष्ठनाशिनी ॥ २१०४
पूतिपर्णी सोमराजी, सुवल्ली सोमवल्लिका ।
अवल्गुजः कृष्णफला, दुर्लेखा पूतिफल्यपि ॥ २१०५
रास्नायां श्रेयसी रसा, रसन्यतिरसा रसा ।
एलापर्णी गन्धमूला, सुवहा मारुलापहा ॥ २१०६

नाकुल्यां सर्पगन्धा तु, सुगन्धा वारिपत्रका ।
गन्धनाकुलिकायां तु, सर्पाक्षी विषमर्दिनी ॥ २१०७
महासुगन्धा सुवहा, छत्राकी नकुलप्रिया ।
कुठेरके स्वर्जकः स्यात्क्षुद्रपत्रः कुठिञ्जरः ॥ २१०८
वैकुण्ठस्तीक्ष्णगन्धश्च, द्वितीयो वटपत्रकः ।
पर्णासो बिल्वगन्धश्च, स तु कृष्णः सरालकः ॥ २१०९
कालतालः कृष्णमल्ली, मालुकः कृष्णमालुकः ।
तुलस्यां सुरसा भेतराक्षसी बहुमञ्जरी ॥ २११०
यस्या गौरी शक्रपत्नी, भूतघ्नी देवदुन्दुभिः ।
फणिज्झके मरिचकः, खरपत्रोऽत्रपत्रकः ॥ २१११
मरूपको मरुबको, जम्भीरो मारुतः फणी ।
त्रायन्ती त्रायमाणायां, कृतत्राणाङ्घ्रिसानुजा ॥ २११२
वार्षिकं बदरा घृष्टिर्वाराही बलभद्रिका ।
बलदेवा सुदुत्राणा, विष्वक्सेनप्रियापि च ॥ २११३
यवासके धन्वयासो, यासो धन्वयवासकः ।
दूरमूलो दीर्घमूलो, बालपत्रो मरूद्भवः ॥ २११४
कुनाशकोऽधिष्टकण्टस्ताम्रमूली प्रचोदनः ।
दुस्पर्शः कच्छुरानन्ता, समुद्रान्ता दुरालभा ॥ २११५
किराततिक्ते कैरातो, रामसेनः किरातकः ।
अनार्यतिक्तको हैमो, भूनिम्बः काण्डतिक्तकः ॥ २११६

कुष्टे तु पाकलं रामं, वानीरं वाप्यमुत्पलम् ।
वानीरजं चापिभाव्यं, कौरवं व्याधिनामकम् ॥ २११७
वालके जलकेशाख्यं, वर्हिष्टं दीर्घरोमकम् ।
ह्रीवेरो दिव्यवज्राणि, पिङ्गमाचमनं रुचम् ॥ २११८
शंठ्यां पलाशः षड्ग्रन्था, गन्धोली हिमजा वधूः ।
कर्वुरः सुव्रता ग्रन्थमूली पृथुफलाशिका ॥ २११९
एलावालुका स्वैलेयं, वालुकं हरिवालुकम् ।
सुगन्ध्यालकमेल्वालु, दुर्वर्णं प्रसरं दृढम् ॥ २१२०
कुङ्कुमे रक्तपर्यायं, संकोचपिशुनं शुकम् ।
हीरं कुसुम्भं घुसृणं, पीतं वाल्हीकपीतने ॥ २१२१
काश्मीरजं वह्निशिखं, वरं लोहितचन्दनम् ।
जात्यां तु रजनीपुष्पा, मालती तैलभाविनी ॥ २१२२
प्रियंवदा हृद्यगन्धा, मनोज्ञा सुमनोलता ।
तस्यास्तु कलिकायां स्यात्पत्री सौमनसायिनी ॥ २१२३
जातीफले जातिकोशं, शालकं मालतीफलम् ।
मज्जसारं जात्यमृतं, शौण्डं सौमनसं पुटम् ॥ २१२४
यूथिकायां वालपुष्पा, मागधी गङ्गयूथिका ।
गुणोज्ज्वला पुण्यगन्धा, चारुमोटा शिखण्डिनी ॥ २१२५
अम्बष्ठा गणिका सा तु, पीता स्याद्धेमपुष्पिका ।
कुन्दे माध्यः सदापुष्पो, मकरन्दो मनोहरः ॥ २१२६

अट्टहासो भृङ्गमित्र, शाल्योदनो यमश्वस ।
स्यान्नवमालिकाया तु, मोमाली नवमालिनी ॥ २१२७
सत्सला मुकुराराति , सुरभि शिशुगन्धिका ।
कान्ता विभावरी ग्रीष्मा, ग्रैष्मिका शिखरिण्यपि॥ २१२८
मल्लिकाया शीतभीरर्मदयन्ती प्रमोदनी ।
अष्टापदी तृणशूल्य, गवाक्षा भूपदीत्यपि ॥ २१२९
वार्षिक्या षट्पदानन्दी, श्रीमती सुभगा प्रिया ।
सुवर्णा त्रिपुटा न्यस्तसुरूपा मुक्तबन्धनात् ॥ २१३०
कुमार्या तु वर्णिचारुकेसरा भृङ्गसमता ।
तरणी रामतरणिर्गन्धाढ्या कन्यका सहा ॥ २१३१
अमिलाने स्यादम्लानो महासहा ।
रक्तपुष्प कुरुबक , पीतपुष्प कुरण्टक ॥ २१३२
सेरेयके सहचरो, झिण्टी महावरश्च स ।
स तु रक्त कुरवक , स्यात्पीतस्तु कुरण्टक ॥ २१३३
नील आर्तगलो दिसी, बाण ओदनपाक्यपि ।
किंकिराते किंकिराट , पीतभद्र प्रलोम्यपि ॥ २१३४
चित्रके वल्लरीव्याल , पाठीनो दारुण कुट ।
ज्योतिष्को जरणोऽग्न्याख्यो, वह्निर्द्विपिपाठिन ॥२१३५
वासन्त्या स्यात्प्रहसन्ती, सुवसन्ता वसन्तजा ।
सेव्यालिनान्धवा शीतसवासा सीतला वसा ॥ २१३६

कुष्ठे तु पाकलं रामं, वानीरं वाप्यमुत्पलम् ।
वानीरजं वापिभाख्यं, कौरवं व्याधिनामकम् ॥ २११७
वालके जलकेशाख्यं, वर्हिष्टं दीर्घरोमकम् ।
ह्रीवेरो दिव्यवस्त्राणि, पिङ्गमाचमनं रुचम् ॥ २११८
शठ्यां पलाशः पड्ग्रन्था, गन्धोली हिमजा वधूः ।
कर्चुरः सुव्रता ग्रन्थमूली पृथुफलाग्निका ॥ २११९
एलवालुका त्वैलेयं, वालुकं हरिवालुकम् ।
सुगन्ध्यालङ्कमेलवालु, दुर्वर्णं प्रसरं दृढम् ॥ २१२०
कुङ्कुमे रक्तपर्यायं, संकोचपिशुनं शुकम् ।
धीरं कुसुम्भं घुसृणं, पीतं वाल्हीकपीतने ॥ २१२१
काश्मीरजं वह्निशिखं, वरं लोहितचन्दनम् ।
जात्यां तु रजनीपुष्पा, मालती तैलभाविनी ॥ २१२२
प्रियंवदा हयगन्धा, मनोज्ञा सुमनोलता ।
तस्यास्तु कलिकायां स्यात्पत्री सौमनसायिनी ॥ २१२३
जातीफले जातिकोशं, शालूकं मालतीफलम् ।
मज्जगारं जात्यमृतं, शौण्डं सौमनसं पुटम् ॥ २१२४
यूथिकायां बालपुष्पा, मागधी शक्रयूथिका ।
गुणोज्ज्वला पुण्यगन्धा, चारुमोटा शिखण्डिनी ॥ २१२५
अम्बष्ठा गणिका सा तु, पीता स्याद्धेमपुष्पिका ।
कुन्दे माघ्यः मदापुष्पो, मकरन्दो मनोहरः ॥ २१२६

अट्टहासो भृङ्गमित्रं, शाल्योदनो यमश्वसः ।
स्यान्नवमालिकायां तु, मोमाली नवमालिनी ॥ २१२७
सत्तला मुकुराराति:, सुरभिः शिशुगन्धिका ।
कान्ता विभावरी ग्रीष्मा, ग्रैष्मिका शिखरिण्यपि ॥ २१२८
मल्लिकायां शीतभीरुर्मदयन्ती प्रमोदनी ।
अष्टापदी तृणशूल्यं, गवाक्षा भूपदीत्यपि ॥ २१२९
वार्षिक्यां षट्पदानन्दी, श्रीमती सुभगा प्रिया ।
सुवर्णा त्रिपुटा व्यस्रसुरूपा मुक्तबन्धनात् ॥ २१३०
कुमार्यां तु वर्णिचारुकेसरा भृङ्गसंमता ।
तरणी रामतरणिर्गन्धाढ्या कन्यका सहा ॥ २१३१
अमिलाने स्यादम्लानो·········महासहा ।
रक्तपुष्पः कुरुबकः, पीतपुष्पः कुरण्टकः ॥ २१३२
सैरेयके सहचरो, झिण्टी महावरश्च सः ।
स तु रक्तः कुरवकः, स्यात्पीतस्तु कुरण्टकः ॥ २१३३
नील आर्तगलो दिसी, बाण ओदनपाक्यपि ।
किंकिराते किंकिराटः, पीतभद्रः प्रलोभ्यपि ॥ २१३४
चित्रके वल्लरीव्यालः, पाठीनो दारुणः कुटः ।
ज्योतिष्को जरणोऽग्न्याख्यो, वह्निर्द्विपिपाठिनः ॥२१३५
वासन्त्यां स्यात्प्रहसन्ती, सुवसन्ता वसन्तजा ।
सेव्यालिबान्धवा शीतसंवासा सीतला वसा ॥ २१३६

नील्यां श्रीफलिका काला, दोला मेला विशोधनी ।
तूणी तुच्छा भारवाही, रञ्जनी मधुपर्णिका ॥ २१३७
द्रोणी क्लीतकिका ग्राम्या, नीलकेशी महारसा ।
दमने स्याद्ब्रह्मजटा, मुनिर्दोनर्पिपुत्रको ॥ २१३८
गन्धोत्कटः पुण्डरीकः, पाण्डुरागस्तपस्व्यपि ।
धत्तूरे धूर्तधत्तूरौ, कितवो देवता शठः ॥ २१३९
घण्टापुष्पस्तलफलो, मातुलः कनकाह्वयः ।
उन्मत्तो मदनश्चास्य, फलं मातुलपत्रकम् ॥ २१४०
शङ्खपुष्प्यां क्षीरपुष्पी, शिवब्रह्मकिरीटिनी ।
मधुपुष्पी मधुगन्धा, शङ्खाह्वा शङ्खमालिनी ॥ २१४१
धूसरच्छदना श्वेतपुष्पी वनविलासिनी ।
कर्चूरे द्रविडः काल्यो, वेधान्यो गन्धमूलकः ॥ २१४२
मोचामम्वजमोदायां, मयूरो लोचमस्तकः ।
खराश्वा कारवी वस्तगन्धा हस्तिमयूरकः ॥ २१४३
दीप्यो यष्टी ब्रह्मदर्भा, लोचमर्कट इत्यपि ।
यवान्यां स्वादुभगन्धा, यमनी यवमाह्वयः । २१४४
मरदेन्यां तथा दण्डोत्पला गोचन्दना वसा ।
गन्धपर्णी सितैः पुष्पैर्विश्वदेवा तु मारुणैः ॥ २१४५
पर्पटके वरतिक्तो, रजः कवचनामकः ।
गोजिकायां शृङ्गवेरी, दार्विका भूमिकालिका ॥ २१४६

बलायां शीतपाकी स्याद्वोदन्योदनाह्वया ।
वाट्यालकस्तथा वाट्यपुष्पिका पीतपुष्पिका ॥ २१४७
देवसहा सहदेवाऽतिबला वाह्यपुष्पिका ।
ऋष्या प्रोक्ता, ऋष्यगन्धा, कङ्कता वर्षपुष्पिका ॥ २१४८
वाट्यायिनी भूरिबला, तिष्या वीर्या बृहद्बला ।
महागन्धा गन्धबली, मङ्गल्याऽर्थप्रसाधनी ॥ २१४९
मुसल्यां तु तालमूली, दुर्नामारिर्म(श ?)त्विषा ।
ह्रुप्यकन्दा तालपर्णी, सुमूला बलदा शिवा ॥ २१५०
हिङ्गौ जतुकवाल्हीकगूढगन्धानि रामठम् ।
सहस्रवेधि भूतघ्नं, जरणं सूपधूपनम् ॥ २१५१
हिङ्गुपत्र्यां पृथुः पृथ्वी, दीर्घिका चारिपत्रिका ।
जातूका रामठी वंशपत्रा पिण्डा शिवाटिका ॥ २१५२
कारवी करवी तन्वी, वाप्पिका बिल्वकेत्यपि ।
काकजङ्घायां तु दासी, लोमहीना प्रभाबलः ॥ २१५३
नदीकान्तो नद्यास्या च, पारावतपदीत्यपि ।
काकनासायां सुरङ्गा, धायसी वायसाङ्गिका ॥ २१५४
वारुणी तस्करस्नायुः, काकतुण्डफला च सा ।
पाषाणभेदे नगभिच्छिलाभिच्चित्रपर्णकः ॥ २१५५
हपुषायां विस्रगन्धा, वपुषा मत्स्यगन्धिनी ।
साऽन्याऽश्वत्थफला ध्वाङ्क्षनामिका कच्छुनाशिनी ॥ २१५६

घण्टारवायां स्यान्मल्यपुष्पिका श(र)घण्टिका ।
अल्पघण्टा बृहत्पुष्पी, शणपुष्पी महाशणः ॥ २१५७
शणे तु किंकिणी जाली, जन्तुनन्तुर्महाशणः ।
शीघ्रप्ररोही बलवान् सुपुष्पः क्षेत्रमण्डनः ॥ २१५८
कुसुम्भेऽग्निशिखं महारञ्जनं कमलोत्तरम् ।
शालपर्ण्यां दीर्घमूला, त्रिपर्णी पीतिनी ध्रुवा ॥ २१५९
विदारि गन्धातिगुहा, स्थिरा भौमांशुमत्यपि ।
भार्ग्यां बर्बरकः पद्मा, वन्दकोऽङ्गारवल्लिका ॥ २१६०
गर्दभशाकब्राह्मण्यौ, हञ्जी ब्राह्मणयष्टिका ।
आवर्तक्यां चर्मरङ्गा, विभाण्डी पिच्छिका लता ॥ २१६१
रक्तपुष्पा तिंदुकिनी, स्यान्महाजालिनी च सा ।
नाकुल्यां स्यात् पक्षिपीडा, वेत्रमूला विसर्पिणी ॥ २१६२
शङ्खनी वृद्धपादा च, यवतिक्तायशोधराः ।
तेजस्विन्यां पारिजाता, पीताऽश्मा महौजसी ॥ २१६३
तेजोवती तेजिनी च, तेजोह्वा वल्कलेत्यपि ।
पथिकायां तु तुम्बी, ताम्पत्री लवङ्गकम् ॥ २१६४
कन्दपत्रं त्वचं पत्रा, मलपत्ररसुत्तरा ।
मांस्यां यवी कृष्णजटा, नलदा जटिला जटा ॥ २१६५
तपस्विन्यामिशी हिंसा, क्रव्यादी मिशिना च सा ।
गन्धमांस्यां पुनः फेञ्जी, भूतकेशी पिशाचिका ॥ २१६६

सुलोमशा भूतजटा, भूतना केशिकेत्यपि ।
सुरायां सुरभिर्दैत्या, गन्धाढ्यां गन्धमादनी ॥ २१६७
भूरिगन्धा गन्धवती, कुटी गन्धकुटी च सा ।
प्रपौण्डरीके शौण्डर्य, सानुजं पौण्डरीयकम् ॥ २१६८
प्रपुण्डरीक चक्षुष्यं, सत्पुष्पं सानुमानकम् ।
जतुकायां तु जतुका, जतुकृचक्रवर्तिनी ॥ २१६९
जन्तुका जतुकारी च, सहर्षा जननी जनी ।
मासरोहाया विकसा, वृत्ता चर्मकषा रुहा ॥ २१७०
रक्तपाद्या नमस्कारी, समङ्गाऽञ्जलिकारिका ।
गण्डकाली शमीपत्रा, राजा खदिरिका च सा॥ २१७१
तद्विशेषस्त्रिपादी स्याल्लुपादी हंसपादिका ।
विषग्रन्थिर्हंसपदी, घृतमण्डलिकापि च ॥ २१७२
अथ स्याज्जलपिप्पल्यां, शारदी शकुलादनी ।
मत्स्यादनी मत्स्यगन्धा, लाङ्गली तोयपिप्पली ॥ २१७३
शिवमल्यां पाशुपतः, सुनतो वसुको वुकः ।
कुलपुष्पः शिवमूलः, पाण्डुरोगप्रिय तुलः ॥ २१७४
अतिविषाया तु निश्वा, मधुरा श्वेतकन्दिका ।
उपविषा श्यामकन्दा, शृङ्गी प्रतिविषारुणा ॥ २१७५
मेदाया स्यान्मणिच्छिद्रा, मधुरा शल्यपर्ण्यपि ।
महामेदायां तु वसुच्छिद्रा देवमणिर्वसुः ॥ २१७६
इत्याचार्यश्रीहेमचन्द्रविरचिते निघण्टुशेषे द्वितीयो गुल्मकाण्डः ।

---

गुञ्जायां कृष्णला काकचिञ्चिका काकणिन्दिका ।
काकादनी काकनखी, रक्तिका काकवृन्तिका ॥ २१७७
काकपीलुश्चकशल्या, दुर्मेषा ताम्रिकोचटा ।
चूडामणिर्दुर्मोधा च, शतपाकी शिखण्डिनी ॥ २१७८
पाठायां श्रेयसी पापचेलिका वृद्धकर्णिका ।
वृकं तिक्ता वरतिक्ता, प्राचीना स्थापिनी वृकी ॥ २१७९
एकाष्ठीला रसाम्बष्ठाऽम्बष्ठकी वृकदन्तिका ।
शतावर्यां बहुसुता, पीवरीन्दीवरी वरी ॥ २१८०
शतमूला शतपदी, शतवीर्या मधुस्रवा ।
नारायणी द्वीपिशत्रुद्वीपिकाभीरुपत्रिकाः ॥ २१८१
महापुरुषदत्तोर्ध्वकण्टका वरकण्टका ।
सहस्रवीर्या (च) सुन्यभीरुः सवरणीत्यपि ॥ २१८२
कटुकायां मत्स्यपित्ता, रोहिणी कटुरोहिणी ।
अशोकरोहिणी कृष्णभेदा तिलकरोहिणी ॥ २१८३
कटम्भरा काण्डरुहा, राज्ञा तिक्तकरोहिणी ।
तिक्ताऽरिष्टा कटुर्मत्स्या, चक्राङ्गी शकुलादनी ॥ २१८४
कपिकच्छा मर्कगुप्ता कण्डुरा दुरभिग्रहा ।
अजहा मर्कटी व्यण्डा, कच्छुरा कपिकच्छुरा ॥ २१८५
ऋष्यप्रोक्ता शूकशिम्बी, लाङ्गली प्रावृषायणी ।
आर्यर्मी यहिपर्याया, कपिरोमा दुरालभा ॥ २१८६

मञ्जिष्ठायां रक्तयष्टिः, समङ्गा विकसाऽरुणा।
भण्डीरी मञ्जुका भण्डी; जिङ्गी योजनवल्ल्यपि॥ २१८७
कालमेषी कालगोष्ठी, मण्डूकपर्णिकापि च।
मरिचे मलिनं कृष्णं, वेल्लजं धर्मपत्तनम्॥ २१८८
पवनेष्टं शिरोवृन्तं, मूषणं कोलकं च तत्।
पिप्पल्यां च पला कृष्णा, वैदेही मागधी कणा॥ २१८९
शौण्डी श्यामोषणा कोलोपकुल्या कृष्णतन्दुला।
तन्मूलं ग्रन्थिकं सर्वग्रन्थिकं चटकाशिरः॥ २१९०
समूलकं कोलमूलं, कटुग्रन्थिकमूषणम्।
चविकायां तथा चव्यं, चवनं कालवल्ल्यपि॥ २१९१
तत्फले वसिरो हस्तिपिप्पली श्रेयसीत्यपि।
गिरिपर्ण्यामरस्फोता, विष्णुक्रान्ता पराजिता॥ २१९२
सा तु श्वेता श्वेतनामा, कटभी श्वेतपुष्पिका।
श्वेतस्यन्दाऽश्वखुरश्च, कृष्णा त्वव्यक्तगन्धिका॥ २१९३
नीलस्यन्दा नीलपुष्पी, महाश्वेताऽङ्गवन्दना।
स्यादिन्द्रवारुणी त्वैन्द्री, विपादनी गवादनी॥ २१९४
इन्द्रैर्वारुः क्षुद्रफला, गोदुघा च गवाक्ष्यपि।
द्वितीयेन्द्रवारुण्यां तु; चित्रफला महाफला॥ २१९५
आत्मरक्षा विशाला च, त्रपुसी तुम्बसीत्यपि।
वचायामुग्रगन्धोग्रा, जटिला शतपर्विका॥ २१९६

इक्षुकर्णिका गोलोमी, लोमशा सूतनाशिनी ।
अन्या श्वेतवचा मेध्या, षड्ग्रन्था हैमवत्यपि ॥ २१९७
शारिवायां गोपकन्या, गोपवल्ली प्रतानिका ।
गोप्या स्फोता लता श्वेता, शरट्या काष्ठशारिवा ॥ २१९८
नागजिह्वाथ सा कृष्णभद्रा चन्दनशारिवा ।
भद्रवल्ली कृष्णवल्ली, चन्दनोत्पलशारिवा ॥ २१९९
मूर्वायां मोरटा देवी, मधुश्रेणी मधूलिका ।
देवश्रेणी मधुरसा, गोकर्णी तेजनी स्रवा ॥ २२००
धनुःश्रेणी चापगुणी, पीलुर्ना तिक्तवल्कली ।
पीलुपर्णी स्निग्धपर्णी.................. ॥ २२०१
लाङ्गल्यां हलिनी नन्दा, विशल्या गर्भपातिनी ।
अनन्ताभिमुखा शैरीपुष्पिका कलिकारिका ॥ २२०२
गुडूच्याममृता सोमवल्ली वत्सादनी धरा ।
छिन्नोद्भवा छिन्नरुहा, विषघ्नी देवनिर्मिता ॥ २२०३
विशल्या कुण्डली छिन्ना, तन्त्रिका चक्रलक्षणा ।
देव्यनन्ता मधुपर्णी, जीवन्त्यमृतवल्ल्यपि ॥ २२०४
देवताडे देवदाली, वृत्तकोशा गरागरी ।
जीमूतकस्तालकश्च, वेण्या सुविषघातिनी । २२०५
कोशातक्यां कृतच्छत्रा, जाली घोषा सुतिक्तका ।
मृदङ्गफलिनी कुटा, घण्टाली कृतवेधना ॥ २२०६

घामार्गवे पीतपुष्पो, महाजला महाफला।
कर्कोटकी कोशफला, राजकोशातकीति च॥ २२०७
हस्तिकोशातकी स्वेमा, विशाला कर्कशच्छदा।
क्षीरिण्यां स्यात्कटुपर्णी, घर्पणी पीतदुग्धिका॥ २२०८
फेनक्षीरा हेमक्षीरा, पीतक्षीरा करीषणी।
हेमाह्वया हेमशिखी, हेमवती हिमावती॥ २२०९
शङ्खिन्यां स्याद्वनहरी, तस्करी चोरपुष्पिका।
किशिनी ग्रन्थिका चण्डा, श्वेतबुघ्ना निशाचरी॥ २२१०
आखुपर्ण्यां पुत्रश्रेणी, न्यग्रोधा शम्बरी वृषा।
चित्रोपचित्रा रण्डाख्या, मत्स्यश्रेणी द्रवन्त्यपि॥ २२११
पद्मिन्यां तु महावल्ली, बिसिनी बिसनामयः।
पलासिनी नालकिनी, नलिनी पुटकिन्यपि॥ २२१२
कमले नलिनं पद्ममरविन्दं कुशेशयम्।
परं शतसहस्राभ्या, पत्र राजीवपुष्करे॥ २२१३
बिसप्रसूनं नालीकं, तामरस महोत्पलम्।
तज्जलात्सरसः पंकात्, परै रुड्रुहजन्मजैः॥ २२१४
पुण्डरीकं सिताम्भोजमथ रक्तसरोरुहम्।
रक्तोत्पलं कोकनदं, कैरविण्यां कुमुद्वती॥ २२१५
उत्पले स्यात्कुवलयं, कुवेलं कुवलं कुवम्।
श्वेते तु कुमुदं चैव, कैरवं गर्दभाह्वयम् २२१६
नीले तु स्यादिन्दीवरं, हल्लकं रक्तसंधिकम्।

सौगन्धिके तु कल्हारं, बीजकोशे वराटकः ॥ २२१७
पद्मनाले तु मृणालं (बिसिनी) तन्तुलं विसम् ।
किञ्जल्के केसरं नव्यदले संवर्तिका भवेत् ॥ २२१८
पद्मकन्दे करहाटशिफे शालूकमौत्पले ।
पद्मबीजे तु पद्माक्षं, पद्मकर्कटिकेत्यपि ॥ २२१९
वारिपर्ण्यां तु पानीयपृष्टगा कुम्भिका हठः ।
जलशूके जलनीली, तथा शैवालशैवले ॥ २२२०

इत्याचार्यश्रीहेमचन्द्रविरचिते निघण्टुशेषे तृतीयो लताकाण्डः ।

---

शतपुष्पायां तु घोषा, शताह्वा माधवी मिषिः ।
अतिच्छत्रा छत्रपुष्पाऽवाक्पुष्पा कारवी सहा ॥ २२२१
जीरके तु कणाजाजी, जरणः कणजीरकः ।
कृष्णेऽस्मिन् कारवी पृथ्वी, सुगन्धा तुपवी पृथुः ॥ २२२२
उपकुञ्ची कुञ्चिका च, कालोपकुञ्चिकापि च ।
रसोने लशुनो म्लेच्छकन्दोऽरिष्टो महौषधम् ॥ २२२३
महाकन्दोऽपदोऽप्येष, गृञ्जनो दीर्घपत्रकः ।
पलाण्डौ यवनेष्टः स्यात्सुकन्दो वक्रभूषणः ॥ २२२४
फरणः स तु हरितो, लताकों दुद्रुमोऽपि च ।
सप्तलायां बहुफेना, सातला विन्दुलाऽमली ॥ २२२५
सारी मरालिका दीप्ता, फेना च मफसा यवा ।
प्रसारण्यां चारुपर्णी, भद्रपर्णी मृताम्बिका ॥ २२२६

भद्रबला भद्रलता, भद्रकाली महाबला ।
सारणी सुप्रसारा च, राजा बला चसापि च ॥ २२२७
ब्राह्मी वयःस्था मत्स्याक्षी, ब्राह्मणी सोमवल्लरी ।
सरस्वती सत्यवती, सुस(सुसुखा) ब्रह्मचारिणी॥ २२२८
सूरणे कण्डुरः कन्दोऽर्शोघाती चित्रदण्डकः ।
वृद्धदारुके त्वावेगी, जीर्णवालुकजुङ्गकौ ॥ २२२९
अजाण्टी ऋक्षगन्धा स्यादन्तकोटकपुष्पिका ।
सुवर्चलायां मण्डूकी, बदराऽऽदित्यवल्लभा ॥ २२३०
मण्डूकपर्ण्यर्कभक्तादित्यवल्ली सुखोद्भिदा ।
भृङ्गराजे भृङ्गरजो, भृङ्गारः केशरञ्जनी ॥ २२३१
अमारको मेकरजो, भृङ्गो मार्कव इत्यपि ।
कासमर्दे त्वरिमर्दः, कालं कतककर्कशौ ॥ २२३२
वास्तुके तु शाकश्रेष्ठः, प्रवालः क्षारपत्रकः ।
शाकवीरो वीरशाकस्ताम्रपुष्पः प्रसादकः ॥ २२३३
पालङ्क्यायां तु पालक्या, छुरिका मधुसूदनी ।
जीवन्त्यां स्याज्जीवनीयं, जीवनी जीववर्द्धिनी ॥ २२३४
माङ्गल्यनामधेया च, शाकश्रेष्ठा यशस्करी ।
स्यादम्ललोणिकायां तु, चाङ्गेरी चुक्रिका रसा ॥ २२३५
अम्बष्ठाऽम्लोलिका दन्तशठाटोलाम्लटोलकः ।
नरेन्द्रमाता क्षुद्राम्ली, चतुष्पर्णी च लोणिका ॥ २२३६
तन्दुलीये मेघनादस्तन्दुली तन्दुलेरकः ।

गण्डीरको रक्तकाण्डो, विषहार्यल्पमारिषः ॥ २२३७
समण्ठो तु तोयवृत्तिर्गण्डीरस्तोयमञ्जरी ।
समष्ठीला शोफहरी, जलपा मार्गतूलकः ॥ २२३८
अन्यः सुस्थलगण्डीरः, कर्बरष्टकदेशजः ।
काकमाच्यां काकमाची, काकसाह्वा वृषायणी ॥ २२३९
श्रीहस्तिन्यां तु भूरुण्डी, कुरुण्डी काश्मरीरिपुः ।
सुनिषण्णे सुचिपत्रः, स्वस्तिकः शिरिवारकः ॥ २२४०
श्रीवारकः शितिवरो, वितुन्नः कुक्कुटः शितिः ।
मूलके तु महाकन्दो, रुचिष्यो हस्तिदन्तकः ॥ २२४१
चुक्षिका नीलकण्ठश्च, सेकिमो हरिपर्णकः ।
चाणाक्यमूलके शालमर्कटो मरुसंभवः ॥ २२४२
विष्णुगुप्तमतो मिश्रः, स्थाल्यो मर्कटोऽपि च ।
हिलमोच्यां शङ्खधरा, जलब्राह्मी च मोचिका ॥ २२४३
कलम्ब्यां तु शतपर्वा, कलम्बूर्यासी च सा ।
कारवेल्ल्यां तु सुषवी, कटिल्ला मृदुपर्णिका ॥ २२४४
पटोले तु पाण्डुफलः, कुलकः कर्कशच्छदः ।
राजीफलः कफहरो, राजिमानमृताफलः ॥ २२४५
कर्कोटे तु किलासघ्नस्तिक्तपर्वः सुगन्धकः ।
कूष्माण्डके तु कर्कारुः, कलिङ्ग्यां बहुपुत्रिका ॥ २२४६
तुम्ब्यां पिण्डफलेक्ष्वाकुस्तिक्तबीजा महाफला ।
अलाबूः क्षत्रियवरा, कटुका लाबुनी च सा ॥ २२४७

चिर्भिट्यां त्रपुसी वालुक्येर्वारुर्व्याडपत्रिका ।
ऊर्वारुः कर्कटीत्वत्र, फला राजादनीलता ॥ २२४८
छर्दनीव विषाद्वथ, तस्याः पक्वफलस्फुटी ।
कूर्चके शृङ्गकः सर्जो, दीर्घायुः कूर्चशीर्षकः ॥ २२४९
मङ्गल्यनामधेये च, जीवकः प्रियजीवकः ।
हस्ताङ्गको मधुरकः, प्राणकश्चिरजीव्यपि ॥ २२५०
पुष्करमूले स्यान्मूलं, वीरपुष्करनामकम् ।
पौष्करं पुष्करजटा, काश्मीरं पद्मवर्णकम् ॥ २२५१
मस्तुगन्धायां तु गन्धा, स्वरपुष्पा शाकम्भरा ।
कर्परी बर्बरी तुङ्गी, पूतिमयूर इत्यपि ॥ २२५२
चिञ्च्यां रक्तफला गोम्हा, मवालफलपोषिका ।
ओष्ठोपमफला तुण्डी, तुण्डिका पीलुपर्ण्यपि ॥ २२५३
इत्याचार्यश्रीहेमचन्द्रविरचिते निघण्टुशेषे चतुर्थः शाककाण्डः ।

वायसेक्षुः पोटगलः, कासेक्षुः कोकिनां क्षमः ॥ २२५७
उलपू/घरवजो वालकेशी दृढलतापि च ।
इक्षू रसालो गण्डीरी, गण्डकी क्षुद्रपत्रकः ॥ २२५८
तस्यैकादश भेदाः स्युः, पुण्ड्रकान्तारकादयः ।
नले नडः शून्यमध्यो, गमनो नर्तको नटः ॥ २२५९
अरण्यनलको रन्ध्री, पोटगलो विभीषणः ।
नलिनुर्भ्रामनलिका, नाकुली लेखकाञ्चिता ॥ २२६०
शरे तु मुञ्जो बाणाख्यः, स्थूलदर्भः पितामहः ।
गुञ्जस्तजनको भद्रमुञ्जो याजनकक्षुरः ॥ २२६१
मुञ्जस्तु यज्ञिको मध्ये, दृढत्वग्ब्रह्ममेखलः ।
अथ बालतृणे शष्पं, शुकं शालिकमङ्कुलम् ॥ २२६२
तृणं स्यादर्जुनं घासे, यवसं चारि इत्यपि ।
दर्वायां तु शतपर्वा, भार्गवी विजया जया ॥ २२६३
मङ्गल्या स्यादलाऽनन्ता, मरी प्रतानिका रुहा ।
सहस्रवीर्या श्यामाङ्गी, हरिता हरितात्यपि ॥ २२६४
श्वेतदूर्वा तु गोलोमी, शतवीर्या शता लता ।
गण्डदूर्वायां मुण्डाली, वारुणी शकुलाक्षकः ॥ २२६५
मुस्तायां भद्रको भद्रमुस्ता राजकशेरुकः ।
गुन्द्री वरोहो गाङ्गेयः, कुरुविन्दोऽम्बुदाह्वयः ॥ २२६६
क्षुद्रं नटे तु कैवर्ती, मुस्तकं जीवनाह्वयम् ।
काण्डीरकं जीवबुध्नं, गोनर्दं गोपुरप्लवम् ॥ २२६७

शतपुष्पं दारपुरं, वानेयं परिपेलवम् ।
जलमुक्ता मुस्तकाभं, शैवालदलसंभवम् ॥ २२६८
वीरणे तु वीरतरं, वीरभद्रं समूलकम् ।
मूलेऽस्योशीरमभयं, समगन्धि रणप्रियम् ॥ २२६९
लामज्जके तु नलदमसृणालं लवं लघु ।
इष्टकापथकं शीघ्रं, दीर्घमूलं जलाशयम् ॥ २२७०

इत्याचार्यश्रीहेमचन्द्रविरचिते निघण्टुशेषे पञ्चमस्तृणकाण्डः ।

अथ धान्ये सस्यं सील्यं, व्रीहिः स्तम्बकरी अपि ।
आशौ स्यात्पाटलो व्रीहिर्गर्भपाकिनि षष्टिकः ॥ २२७१
शालौ तु कलमाद्याः स्युः, कलमे तु कलायकः ।
लोहिते रक्तशालिः स्यान्महाशालौ सुगन्धिकः ॥ २२७२
यवे हयप्रियस्तार्क्ष्यशूकस्तोक्मयस्त्वसौ हरित् ।
मङ्गल्यके स्यान्मसूरः, कलाये तु सतीनकः ॥ २२७३
हरेणुः खण्डिकश्चाथ, चणके हरिमन्थकः ।
माषे तु मदनो नन्दी, सरी बीजवरो बली ॥ २२७४
मुद्गे तु प्रथनो लोभ्यो, वलाटो हरितो हरिः ।
पीतेऽस्मिन् वसुखण्डीरः, प्रवेलजयशारदाः ॥ २२७५
कृष्णे प्रवरवासन्तहरिमन्थजशिम्बिकाः ।
वनमुद्गे [illegible] वरका, निगूढककुलीनकाः ॥ २२७६
खण्डिको राजमुद्गे तु, मकुष्टकमयुष्टकौ ।

गोधूमे सुमनो वल्ले, निष्पावः शितिशिम्बिकः ॥ २२७७
कुलत्थे तु कालवृन्तस्ताम्रवृन्ते कुलत्थिका।
आढक्यां तुवरी वर्णा, स्यात्कुल्माषे तु यावकः ॥ २२७८
नीवारस्तु वनव्रीहिः, श्यामाके श्यामकः समौ।
कङ्गौ तु कङ्गुनी कङ्गुः, प्रियङ्गौ पीततन्दुला ॥ २२७९
सा कृष्णा मधुका रक्ता, शोधिता सुशटी शिता।
पीता माधव्यथो दोला, कोद्रवः कोरदूषकः ॥ २२८०
चीनके तु काककङ्गुर्यवनाले तु योनलः।
जूर्णाह्वयो देवधान्यं, जोर्णाला बीजपुष्पिका ॥ २२८१
शणे भङ्गा मातुलानी, स्यादुमा तु क्षमाऽतसी।
गवेधुकायां गवेधुर्वन्यतिले तु जर्तिलः ॥ २२८२
षण्ढतिले तिलपिंजस्तिलपेजोऽथ सर्षपे।
कदम्बकस्तुतुंभोऽथ, सिद्धार्थः श्वेतसर्षपः ॥ २२८३
मापादयः शमीधान्यं, शूकधान्यं यवादयः।
स्यात्सस्यशूके किंसारु, कणिशं सस्यशीर्षकम् ॥ २२८४
स्तम्बे तु गुच्छो धान्यादेर्नालः काण्डोऽफले त्विह।
पलालो धान्यत्वपलः, तुषे बुसे कडङ्गरः ॥ २२८५

इत्याचार्यश्रीहेमचन्द्रविरचिते निघण्टुशेषे षष्ठो धान्यकाण्डः।

इति श्रीहेमचन्द्राचार्यविरचितो निघण्टुशेषः समाप्तः।

# श्रीअभिधानचिन्तामणौ शुद्धिपत्रकम् ।

## १ देवाधिदेवकाण्डः प्रथमः ।

| पृष्ठ | श्लो०पा० | अशुद्ध | शुद्ध |
|---|---|---|---|
| १ | ५–२ | °दाहा° | °दाह° |
| ३ | १२ | ॥ १३ ॥ | ॥ १२ ॥ |
| ३ | १७–४ | वाड° | षड° |
| ,, | १९–४ | लिङ्ग° | लिङ्गा° |
| ४ | २६ | ॥ ४६ ॥ | ॥ २६ ॥ |
| ५ | २८–१ | शान्ति.[११] | शान्ति.[११] |
| ५ | ३०–२ | वीरश्चरमतीर्थकृत् | वीरश्चरमतीर्थकृत् |
| ५ | ,,–३ | महावीरो | महावीरो[१] |
| ,, | ३३–२ | जम्बूस्वाम्यथ प्रभवे प्रभुः | जम्बूस्वाम्यथ प्रभव-प्रभुः |
| ,, | ३४–३ | महागिरि सुहस्त्याद्या | महागिरि सुहस्त्याद्या |
| ६ | ४०–२ | सुव्रता चिरा | सुव्रताऽचिरा |
| ,, | ४२–१ | सुसुमश्चापि | कुसुमश्चापि |
| ७ | ४८–१ | मृग छागो | मृगश्छागो |
| ९ | ६०–२ | वैरेतयो[१] | वैरेतयो[१] |
| ११ | ६९–२ | धर्माय° | धर्मार्थ° |
| ११ | ७२–३ | रत्यरती | रत्यरती |
| ,, टीप्पन पंक्ति ७ | | साहसोपतता | साहसोपेतता |
| १२ | ७५–२ | निर्वाण° | निर्याण° |

| पृष्ठ | श्लो०पा० | अशुद्ध | शुद्ध |
| --- | --- | --- | --- |
| १२ | ७७–१ | अमापणं पु० इत्यादि श्लो० | मोक्षोपायो योगो ज्ञानश्रद्धानचरणात्मकः। अमापणं पुनर्मौनं, गुरुर्धर्मोपदेशकः॥ ७७॥ |
| ,, | ८१–२ | सुनता° | सूनृता° |

२ देवकाण्डः द्वितीयः।

| पृष्ठ | श्लो०पा० | अशुद्ध | शुद्ध |
| --- | --- | --- | --- |
| १५ | ९३ | ९४ | ९३ |
| १६ | ९९–४ | °घणि° | घृणि |
| ,, | ,,–,, | °वृ° | °वृ° |
| ,, | १०२ | १०१ | १०२ |
| ,, | १०५ | १९ | १०५ |
| १७ | १०६–१ | °शोऽंशः | °शोंऽशः |
| ,, | १११–२ | °व्यं° | °व्यंऽ० |
| ,, | ,, ,, | फा° | फ° |
| १८ | ११५–१ | भाद्र° | भद्र |
| ,, | ११८–४ | फाल्गु° | फल्गु° |
| ,, | १२१–२ | °मांनु° | °मांशु° |
| १९ | १२३ | १३३ | १२३ |
| ,, | १२४–१ | °वी° | °वि° |
| ,, | १२५–२ | उद्° | उप° |
| ,, | ,,–,, | रिष्टं | रिष्टं |
| ,, | १२७–२ | °टीको° | °टिको° |

| पृष्ठ | श्लो०पा० | अशुद्ध | शुद्ध |
|---|---|---|---|
| २८ | १९३–२ | शङखो | शङ्खो |
| ,, | १६ पङ्क्तिः | ५ ति | ५ इति |
| २९ | १९७–१ | °ब्रतो | °ब्रती |
| ३० | २०३–२ | °म्बिको | °म्बको |
| ३१ | २१०–२ | रिटिनां° | रीटिनां° |
| ,, | ,, –४ | नदि° | नन्दि° |
| ,, | २११ | १२१ | २११ |
| ,, | २१२–१ | शम्भूः | शम्भुः |
| ,, | २१४–१ | °हंनो | °दंनो |
| ३२ | २१५–१ | °पड° | °पद्द° |
| ,, | २१६–१ | जम्हु° | जह्नु° |
| ,, | ,, –२ | ब्वसुः | वंसुः |
| ,, | २१७–४ | सुवण | सुवर्णं |
| ,, | २१८–३ | जगन्नाथो, | जंगन्नाथो, |
| ,, | २१९–१ | शाङ्ग– | शार्ङ्ग– |
| ,, | ,, –४ | °लर्जुनाः | लार्जुनाः |
| ,, | २२०–२ | °रिष्ट° | °रिष्ट° |
| ३३ | २२३–४ | दुन्दुमिः | दुन्दुभिः |
| ,, | २२५–३ | मुशलं | मुसलं |
| ३४ | २२७–३ | °थिसरौ | °धिः सारौ |
| ,, | २२८–४ | शम्ब° | शंब° |
| ,, | ,, | २१८ | २२८ |
| ,, | २३१–२ | बंन्न° | मंत्रि° |

| पृष्ठ | श्लो०पा० | अशुद्ध | शुद्ध |
|---|---|---|---|
| ३४ | २३१–३ | स्वण° | स्वर्ण° |
| ३५ | २३७–२ | गोतमा° | गोतमा° |
| ३७ | २५८–३ | क्रलि° | कल° |
| ,, | २५९–२ | °हिकां | °रिहका |
| ३९ | २७०–१ | स्लांघा | श्लाघा |
| ४० | २८०–३ | नत्तं | नृत्तं |
| ४१ | २८५–३ | कैशि° | कैशि° |
| ,, | २८६–२ | सरध्जः | सरघ्वजः |
| ,, | २९१–२ | °ककुम्भ° | °ककुभ° |
| ,, | २९२–४ | °शर्वं | शर्वं |
| ४२ | २९५–३ | सात्विक | सात्त्विक |
| ४३ | ३०१–२ | °मुख्य° | °मुख° |
| ,, | ३०७–४ | सात्विकाः | सात्त्विकाः |
| ४४ | ३१३–२ | संछपाः | संक्षपाः |
| ४६ | ३२१–४ | पशुविको | पशुचक्रो |
| ,, | ३२२–१ | °शुक | शुक |
| ४७ | ३२४ | ३२५ | ३२४ |
| ,, | ३२६–४ | प्रयोज्याः | प्रयोज्यः |

३ मर्त्यकाण्डस्तृतीयः ।

| पृष्ठ | श्लो०पा० | अशुद्ध | शुद्ध |
|---|---|---|---|
| ४८ | ३३९–३ | पृदं, | पृदाः, |
| ५० | ३५१–२ | सवदान्यो | स वदान्यो |
| ,, | ३५२–२ | °णांशी | णांशा |
| ५१ | ३६०–१ | °रो,दाम्नो°, | °रोदाम्नो° |

| पृष्ठ | श्लो०पा० | अशुद्ध | शुद्ध |
|---|---|---|---|
| ५२ | ३७१–३ | निसूदनानि | निषूदनानि |
| ५३ | ३७२–२ | निष्कारणा° | निष्कारण° |
| ,, | ,, | × | ॥३७२॥ |
| ,, | ३७४–२ | °गतो | गतौ |
| ,, | ३७८–२ | °धिछलम् | °धिश्छलम् |
| ,, | ,, | ३६८ | ३७८ |
| ,, | ३७९–२ | प्रतारणंम् | प्रतारणम् |
| ५५ | ३९०–१ | विसरवरो | विसृत्वरो |
| ,, | ,, ,, | विसमरः, | विसृमरः, |
| ,, | ३९५–२ | दावि° | दीदि° |
| ५६ | ४००–१ | घृतत्वरः | घृतवरः |
| ,, | ४०३–२ | °कृतिः | °कृती |
| ५७ | ४०७–३ | हवो | ह्वो |
| ५८ | ४१५–१,२ | धान्याम्लाना° | धान्याम्लारना |
| ,, | ४१७–२ | वेसवार | वेषवार |
| ,, | ४१९–१ | आसुरी | असुरी |
| ५९ | ४२७–२ | स्वोदर | स्वोदर |
| ६० | ४३१–४ | प्रसृतो° | प्रथितो° |
| ,, | ४३२–३ | घष्टस्तु | घष्टस्तु |
| ,, | ,, –४ | °घृष्णुजौ | °घृष्णजौ |
| ६१ | ४३९–१ | संय्यतश्च | सँय्यतश्च |
| ,, | ४४१–१ | विप्रकृतौ, | निप्रकृतो, |
| ६२ | ४४५–२ | गृहीतरि | ग्रहीतरि |

| पृष्ठ | श्लो०पा० | अशुद्ध | शुद्ध |
|---|---|---|---|
| ६२ | ४४६–४ | °र्जितोऽर्हि° | °र्जितेऽर्हि° |
| ,, | ४५०–१ | पिचण्डिलो | पिचिण्डिलो, |
| ,, | ,, –३ | विस्तु | विस्तु |
| ६३ | ४५२–१ | खुरणसा, | खुरणस |
| ,, | ४५६–४ | वलिनौ | वलिनो |
| ,, | ,, ,, | वलिभौ | वलिभः |
| ,, | ४५८–३ | वलिरः | वलिरः |
| ६४ | ४६१–४ | किलासिनिः | किलासिनि |
| ,, | ४६५–१ | क्षणा° | क्षण° |
| ६५ | ४६९–१ | छर्दें | छर्दौ |
| ,, | ४७१–१ | अनाह° | आनाह° |
| ६६ | ४८०–२ | सङ्ग° | सह्य° |
| ,, | ४८३–४ | पुल्लवः | घल्लवः |
| ६७ | ४८८–४ | शस्ता | शास्ता |
| ६८ | ४९४–२ | जह्निको | आह्निको |
| ,, | ४९९–२ | प्राघूर्णो° | प्राघूणो° |
| ,, | ,, –३ | प्राघूर्णकोऽ | प्राघूर्णकेऽ |
| ७० | ५०७–३ | °र्व्योकः | °व्योकः |
| ,, | ५०८–१ | कुट्ट° | कुट्टु° |
| ,, | त्रयोदशपङ्क्तौ | ,, | ,, |
| ,, | चतुर्दशपङ्क्तौ | °ल्लतितं | °ल्लिडितं |
| ७१ | ५१३–४ | कुटुम्बिना | कुटुम्बिनी |
| ,, | ५१४–४ | परस्पम् | परस्परम् |

| पृष्ठ | श्लो०पा० | अशुद्ध | शुद्ध |
|---|---|---|---|
| ७१ | ५१५–३ | पयसी | प्रेयसी |
| ,, | ५१६–१ | दयेशा | हृदयेशा |
| ,, | ५१७–२ | घनस्मिता | घरस्मिता |
| ७२ | ५२१–३ | °प्रयन्त | °प्रयन्तः |
| ,, | ५२२–१ | प्राज्ञी प्रज्ञा | प्रज्ञा प्राज्ञी |
| ,, | ,, ,, | प्रजानन्त्यां | प्रजानत्यां |
| ,, | ५२३–१ | °चार्य्याणी, | °चार्य्यानी |
| ,, | ,, –४ | °स्यर्य्यां | °स्यर्य्यी |
| ७३ | ५३२–३ | साधारणा स्त्री | साधारणस्त्री |
| ,, | ५३४–३ | लग्ना | नग्ना |
| ७४ | ५३६–२ | स्त्रीधमः | स्त्रीधर्मः |
| ,, | ५३८–४ | स्याद्गभ° | स्याद्गर्भ° |
| ७५ | ५४६–४ | °वन्द्ग° | °यद्माद्ग° |
| ,, | ५४७–२ | सभगा° | सुभगा° |
| ,, | ५५०–१ | °सौरस्यौ, | °सोरस्यौ, |
| ७७ | ५६३–४ | मेर° | येर° |
| ७८ | ५६७–२ | मस्तक° | मस्तिक° |
| ,, | ५७०–३ | वेणि | वेणिः |
| ,, | ५७४–१ | श्रोतं | श्रोत्रं |
| ,, | ,, | ५७९ | ५७४ |
| ७९ | ५७६–३ | °ऽक्षिण्य° | °ऽक्ष्ण्य° |
| ,, | ५७८–४ | निमिलनम् | निमीलनम् |
| ,, | ५७९–२ | भ्रू° | भ्रू° |

| पृष्ठ | श्लो०पा० | अशुद्ध | शुद्ध |
|---|---|---|---|
| ७९ | ,, –३ | अविकारे | अ़्विकारे |
| ,, | ,, –४ | –अ– | –अ़्– |
| ,, | ५८०–१ | अवो° | अुवो |
| ८० | ५८७–२ | कुकपार्श्वे | कुकपार्श्वौ |
| ,, | ५८८–४ | °रोऽसगः | °रौंऽसगः |
| ,, | ५८९–२ | दोर्बांहा | दोर्बांहा |
| ८१ | ५९६–४ | सिंहवालस्तु | सिंहवल्लस्तु |
| ,, | ५९७–२ | मुंस्तु° | मुंस्तु° |
| ८२ | ६०३–३ | चूचुकन्तु | चूचुकं तु |
| ,, | ६०४–३ | कलखण्डं | कालखण्डं |
| ,, | ६०६–४ | वस्ति° | वस्ति° |
| ८३ | ६१४–१ | मल्कीलो | नंलथीलो |
| ,, | ,, –२ | °आरो° | °आद्रो° |
| ८५ | ६२५–२ | °लुङ्गकः | °लुङ्गकः |
| ,, | ६३०–३ | छवि° | छवि° |
| ८६ | ६३२–१ | जैर्भ, | जैह्वं |
| ,, | ६३३–३ | वस्ति° | वस्ति° |
| ,, | ६३४–२ | °वस्करः | वस्ररः |
| ८७ | ६४५–२ | वाह्नि° | वह्नि° |
| ८८ | ६५१–३ | सिद्ध° | स्निद्ध° |
| ,, | ६५५–२ | च, | × |
| ,, | ,, –३ | वाल° | वाल° |
| ८९ | ६५६–१ | वाडपत्र | वाडपत्र |

| पृष्ठ | श्लो०पा० | अशुद्ध | शुद्ध |
| --- | --- | --- | --- |
| ८९ | ६५८–२ | °वलीलता | °वलीलताः |
| ,, | ६६३–२ | °वापा | °वापी |
| ,, | ६६४–१ | °मुंद्रा, | °मुद्रा, |
| ९० | ६६५–२ | किङ्किणी | किङ्कणी |
| ९० | ६७०–३ | °रूणांयु° | °रूर्णायु° |
| ९१ | ६७४–३ | चोलः | चोलः |
| ,, | ६७६–२ | नक्रक° | नक्तक° |
| ,, | ६७८–२ | रवामो° | ध्यामो° |
| ९२ | ६८४–१ | मुकुरा° | मकुरा° |
| ९३ | ६९५–१ | प्राजपत्य | प्राजापत्य |
| ९४ | ७००–३ | पृयु° | पृथु° |
| ,, | ७०२–२ | सर्व्यदमः | सर्व्वंदम: |
| ९५ | ७१०–१ | बीभत्सुः | बीभत्सु.(त्स.) |
| ९६ | ७१६–१ | परिबर्ह° | परिवर्ह° |
| ,, | ७१८–१ | °करङ्का | करङ्को |
| ९७ | ७२३–४ | रूपा° | रूप्या° |
| ,, | ७२६–२ | गोपा | गोपो |
| ९८ | ७२९–४ | प्रत्यर्घ्य° | प्रत्यर्घ्य° |
| ,, | ७३३–२ | °परुषः | °पूरुषः |
| ९९ | ७३६–१ | सामदा– | सामदान |
| ,, | ७३८–३ | मृंगया | मृगया |
| १०० | ७४१–४ | °द्रूम् | °द्रुम् |
| ,, | ७४२–४ | समभ्रमम् | समभ्रमम् |

| पृष्ठ | श्लो०पा० | अशुद्ध | शुद्ध |
| --- | --- | --- | --- |
| १०१ | ७४६–२ | ध्वजिना | ध्वजिनी |
| ,, | ,, –२ | पताकिना | पताकिनी |
| ,, | ७४९–१ | अनीकिना | अनीकिनी |
| ,, | ७५१–४ | शताङ्गः | शताङ्गः |
| १०२ | ७५७–४ | यानमुख | यानमुखं |
| १०३ | ७६१–१ | रथा° | रथ° |
| ,, | ७६५–४ | सन्नद्धा | सन्नद्धो |
| ,, | ७६६–२ | वम | वर्मं |
| ,, | ,, –२ | कवच | कवचं |
| ,, | ,, –४ | °त्रुम | °त्रुभं |
| १०४ | ७६७–१ | शूर्पांसा, | शूर्पांसो |
| ,, | ७६९–२ | °यसा | °यसी |
| १०४ | ६७२–४ | लक्षतः | लक्ष्यतः |
| १०५ | ७७४–२ | मुक्त | मुक्तं |
| ,, | ७७६–२ | सिञ्जिनी | शिञ्जिनी |
| ,, | ,, –४ | °कारणम् | °वारणम् |
| १०५ | ७७८–१ | गार्द्धपक्षी, | गार्द्धपक्षौ |
| ,, | ७७९–३ | प्रहिते | प्रहितो |
| १०६ | ७८३–३ | घर्म | घर्मं |
| ,, | ७८५–२ | °दिरा | °दीटी |
| ,, | ,, –३ | भिन्दिपाल | भिन्दिपाले |
| १०७ | ७८७–३ | °शदुस्फो | °सदु.स्फो° |
| ,, | ७९२–४ | ऊर्जरयू° | ऊर्जरयू° |

